ऽत्यन्तोपकारजनयिता सलक्ष्यते सरहस्यसकलशास्त्रपारदृश्वा विविधदर्शनावगाही समुन्नतौदार्यधैर्यप्रमुखगुणप्रगुणितवर्ष्मा परोपकृतिविनिरतसाविराजितचेतोवृत्तिः सोऽजनीति तत्कृतयाऽनयाटीकया यावदर्थबोधिन्या लक्ष्यीक्रियते । तत्रभवानयं श्रीमद्यशोभद्रसूरिः कतमस्मिन् समये कं देशं व्यभूषयदितिचेत् वैक्रमाब्दे द्वादशशतपरिमिते संवत्सरे प्रायेणेमां भारतीयां वसुन्धरामनवद्यजनभूरिभाग्यभव्यभगवच्छास्त्रकीयं जनुषा प्रभूतसम्पदां भाजनं व्यतनोदिति प्राक्तनपट्टावल्युल्लसत्परम्परातोऽनुगीयते । तेन सूरीश्वरेण प्रणीता अन्ये ग्रन्थाः सन्ति न वेत्यन्वेषणाया विहितव्यापारा कतमे विद्वांसः साम्प्रतं दरीदृश्यन्ते । एतत्षोडशकीयविवरणप्रणेतृ श्रीमद्यशोभद्रसूरीश्वराशयादीपद् भिन्नार्थप्रदर्शिनी टीकाऽपरा करामलकवत् समधिगतसम्यक्तत्त्वातत्त्वविवेकेन सञ्ज्ञानपारगामिना प्रमाणाद्यनेकदर्शनपारावारीणेन श्रीमद्यशोविजयोपाध्यायेन संस्कृता विराजते श्रीमद्यशोभद्रयशोविजयीयटीकयोः कुत्रचिद् कस्यचिद् विषयस्य समानार्थत्वं प्रत्यपादि, कस्मिंश्चिद्विषयेतु विलोक्यतेऽल्पन्यूनत्वमर्थविशेषस्य, सामान्यविशेषभावार्थपरमवेशय कुत्रचिदभिव्यज्यते, कस्मिंश्चिद्विषये द्वयोरन्यतमीयमर्थसौकर्यमप्यालक्ष्यते ।

प्रतिष्ठाविधिप्रकरणगततुरीयश्लोकस्य विवरणं श्रीमद्यशोभद्रसूरिणा साधारणार्थसंसूचकं संक्षेपतो व्यधायि, तस्यैव श्लोकस्य चाष्टादशशततमे हायने समभिरूढमूर्तिपूजनसंशयानां जनवृन्दानां मनः समाधातुं श्रीमदुपाध्यायेन सप्रपञ्चं न्यायसन्दर्भोपेतं मूर्तिपूजकापेतमतनिरर्थकं व्याख्यानमकारि, हेतुश्चात्र श्रीमद्यशोभद्रसूरिसमकालीनो मूर्तिप्रतिष्ठानिषेधकपक्षीयो जनसमाजो नाजागरीत्, श्रीमदुपाध्यायस्य समयेतु तादृक्षो मूर्तिपूजनामित्रवारः समजनि । सुभद्रभावतो मूर्तिपूजकैश्च कीदृग्विधं फलमवाप्यते तन्निराकर्तुं चतुर्दशश्लोकग्रथितरूपदृष्टान्तविवेचनं तस्यैव प्रकरणस्य पञ्चदशश्लोकस्य व्याख्यानञ्च श्रीमद्यशोभद्रसूरीश्वरः सामान्यत्वेनाकार्षीत् । तस्यैव श्लोकयुगलस्य विवृत्तिः प्रस्तुतविषयदार्ढ्यबोधनार्थं

श्रेष्ठि—देवचन्द्र लालभाई-जैनपुस्तकोद्धार—ग्रन्थाङ्कः ६.

सुविहितपुरन्दर-श्रीयशोभद्रसूरिकृतविवरण, न्यायाचार्यश्रीमद्यशोविजयोपाध्याय-
प्रणीतयोगदीपिकावृत्तियुतम्, युगप्रधानागमधरश्रीहरिभद्रसूरिविरचितम्

# श्रीषोडशकप्रकरणम्.

संशोधकः—योगनिष्ठ श्रीमद्बुद्धिसागरः । स्थापकः—नगीनभाई-घेलाभाई-जव्हेरी-एकः कार्यवाहकः

इदं पुस्तकं मुम्बय्यां शाह नगीनभाई-घेलाभाई-जव्हेरीबाजार इत्यनेन निर्णयसागरयन्त्रालये कोलभाटवीथ्यां
२३ तमे गृहे बा. रा. घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।

प्रति ५००

वीरसंवत् २४३७. विक्रमाब्द १९६७. ख्रिस्ती १९११.

निर्देशः ६ आणका.

षोडशके च श्रीमद्धरिभद्रसूरिणा "स्याद्वादागमार्थ" मनुसृत्य रोतरानेकदर्शनीयसगरूपभिदापराकृत्यास्युत्तानाशयेन तदुपपत्तिः समासाधि । सर्वथाय षोडशकग्रन्थो जैनागमपूर्णतरप्रामाण्यावाहक इति साक्षात् प्रकाशयति तथाप्यन्यदीयदर्शनोक्ततत्त्वेषु माऽसूया विधेया, तद्दर्शितसारश्च मध्यस्थदृष्टिधारकेण मनुष्येण यत्नतोऽभिग्राह्य इत्याद्यनल्पकल्पनान् कल्पयित्वा जैनदर्शनीयरहस्यमत्युत्तमप्रौढता बरीभर्त्ति गम्भीरव्यापकत्वनिष्पत्तिञ्च तदैवाऽभिव्रजति । तदर्थप्रतिपादकोऽत्र तदुक्तश्लोको विलिख्यते

तत्रापि च न द्वेषः, कार्यो विषयस्तु यत्नतो मृग्यः, तस्यापि न सद्वचनं, सर्वं यत्प्रवचनादन्यत् ॥ १ ॥

जैनदर्शनेतरवेदान्तादिशास्त्रप्रतिपादितवस्तुतत्त्वानि सम्यक्तां न परिवहन्ति. यत सर्वज्ञप्ररूपितान्येव तानि निर्बाधतया सर्वजनमान्यानि समुचितार्थभाञ्जि प्रशस्यन्ते नान्यथा, मिथ्या श्रुतमपि सम्यग् दृष्ट्या सङ्गृहीतञ्चेत्तदपि सम्यक्त्वरूपेण परिणमतीति "श्रीनन्दीसूत्रे" प्ररूपितम्, मिथ्यादृष्टिपरिगृहीतं सम्यक्श्रुतमपि मिथ्यात्वेन परिणमत्येन, प्राप्तसम्यक्त्वदृष्टिना पुंसा समानि सदसद्वचांसि सम्यक्तयैव परिणीयन्ते, इत्थ जैनागमानुसारेण परकीयद्वेषादिपरिहारंख्यापयित्वा श्रीमान् हरिभद्रसूरीश्वरो जैनशासनस्य पूर्णतर महत्तां पोषयति, अथैवं सङ्क्षेपतः षोडशकव्याख्या पर्यालोच्य सद्यः समुत्पन्नामेयप्रमोदवशंवदेन मयाऽनैनावदलक्ष्यतया निवेद्यते, अस्य षोडशकाभिधेयस्य ग्रन्थस्य विधानेन श्रीमान् हरिभद्रसूरिर्भारतवासिजनानां वचोऽगोचरमुपकारमकार्षीत् भारतभूमिवर्त्तिना विद्वद्वरेण्यानां धुरि तस्य सूरीश्वरस्याभिधानमाद्याङ्कभाक्, सौवर्णेयाक्षराङ्कितञ्च सातत्येन विराजते, अस्य षोडशकप्रकरणस्य प्राक्तनानि त्रीणि चत्वारि प्रत्यन्तराणि मेलयित्वा यथामति परिशोधितोऽयं ग्रन्थः, क्वचिच्च प्रमादभ्रान्त्यादिपुरुषदोषवशात् पतितं स्खलित वाऽसात् तद्गुण-

# "अथ पोडशकप्रकरणपर्यालोचना वितन्यते."

एतदार्यापोडशकप्रकरण श्रीमत् सर्वज्ञकथितस्याद्वाददर्शनावलम्बिनामर्वाचोऽनारोपजनकागमगोत्तत्त्वपदार्थप्रकाशने तिग्मतिग्मरश्मिस-
गप्रभ श्रीजैनश्वेताम्बरीयाचार्य श्रीमद्धरिभद्रसूरिणा निर्जिताखिलकुमतवादिवृन्देन व्यरचि, जैनागमाना पूर्वापरानलोकनेन हरिभद्रसूर-
यस्त्रयोऽभूवन्निति विज्ञायते, एतद्ग्रन्थोपज्ञाता श्रीमद्धरिभद्रसूरिर्विक्रमाब्द पञ्चशत्याभिमं वसुन्धरापीठं व्यभूपयत्, सूरीश्वरोऽयमगण्यगुण-
विभूपितमूर्त्ति· सकलजगत्या प्रसृमरकीर्त्तिनातो जैनजैनान्यमतानुगायिजनपूज्यपादारविन्दः सज्जनश्रवणगोचरीभूत. कस्य नो जायते वर्णनीया-
स्पदम् ? युरोपीय, जर्मनी, प्रभृति देशान्तरीय विद्वज्जना अप्याधुनिकवर्त्मपद्धत्येम हरिभद्रवचनप्रस्ताव सार सार निजान्त करणेपु भृश-
माविष्कृताश्चर्या जज्ञन्यन्ते, प्रौढार्थप्रख्यापकाना ग्रन्थाना चतुश्चत्वारिंशदधिका चतुर्दशशत्यनेनाचार्येण व्यधायि, प्रायेणाऽय सूरीश्वर·
समुपगतैकपूर्वो बहुश्रुतधारक इत्याचार्यपरम्परातः श्रूयते 'तत्रभवतोऽस्याचार्यस्य जीवनचरित्र तत्कृतग्रन्थपरिगणनच यदि कश्चिद्भावुक-
श्चिकीर्पति तर्ह्यन महानेको ग्रन्थ समभिजायतेऽतोऽत्र गौरवभयात् प्रस्तुतग्रन्थस्य सक्षेपेणावश्यनिवेदनीयार्थो विविच्यते,

एतत्सूरीश्वरकृतग्रन्थस्य पृथगर्थवैशद्यप्रकाशकाना पोडशकप्रकरणाना नामानि यथा, धर्मपरीक्षाभिधमाद्य पोडशक द्वितीयच देशनाख्य
तृतीय धर्मलक्षणपोडशक चतुर्थ धर्मेच्छुलिङ्गाभिख्य पञ्चमञ्च लोकोत्तरतत्त्वप्राप्तिपोडशक पष्ठञ्च जिनमन्दिराभिध पोडशक सप्तम जिनबि-
म्बपोडशकमष्टमच प्रतिष्ठाविधिपोडशक नवमच पूजास्वरूपपोडशक दशम पूजाफलपोडशकमेकादशञ्च श्रुतज्ञानलिङ्गपोडशक द्वादशच

प्रतिपादितमैहभाविकपारभाविकलिंगान्याश्रित्याऽमेध्योत्करस्याप्युच्चारनिकरकल्पस्यापि । प्रवचनोदिताशेषगुणशून्यस्येति यावत् । यत उक्तमणंतसो दव्वलिंगाई ॥ ६ ॥

उ० उक्तार्थे तंत्रांतरसंवादमप्याह । मिथ्येत्यादि हिर्यस्मादपरैरपि तंत्रांतरीयैरप्यशुभभावस्य पुंस इदं केवलं बाह्यलिंगं मिथ्याचारस्य फलं गीतं । मिथ्याचारस्वरूपं चेद "बाह्येन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इंद्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यत " इति । सूत्रेऽपि स्वकीयागमेप्येतद्बाह्यलिंगमविकलं परिपूर्णममेध्योत्करस्याप्युच्चारनिकरकल्पस्याप्युक्तमनंतशो द्रव्यलिंगग्रहणश्रवणात् ॥ ६ ॥

मध्यमबुद्धिर्विचारयति वृत्तमित्युक्तं । तत्र किं तदित्याह ॥

वृत्तं चारित्रं खल्वसदारंभविनिवृत्तिमत्तच्च ॥ सदनुष्ठानं प्रोक्तं कार्ये हेतूपचारेण ॥ ७ ॥

य० वृत्तंवर्त्तनं, विधिप्रतिषेधरूपं । तच्च चारित्रमेव । खलुशब्दस्यावधारणार्थत्वात्तच्चेह सदनुष्ठानं प्रोक्तं । तत्कीदृशमसदारंभविनिवृत्तिमत् असदारंभोऽशोभनारंभः प्राणातिपाताद्याश्रवपंचकरूपस्ततोनिवृत्तिमद्धिंसादिनिवृत्तिरूपमहिंसाद्यात्मकं ननु कथं सदनुष्ठानं चारित्रमभिधीयते । यतश्चारित्रमांतरपरिणामरूपं । सदनुष्ठानं तु बाह्यसत्क्रियारूपं । तदनयोः स्वरूपभेदः परिस्फुट एवास्तीत्याशंक्याह । कार्ये हेतूपचारेण कार्ये सदनुष्ठानरूपे हेतूपचारेण भावोपचरणात्तत्पूर्व्वकत्वात्सत्क्रियायाः । यच्चांतरपरिणामविकलं तत् सदनुष्ठानमेव न भवतीतिभावः ॥ ७ ॥

उ० वृत्तमाश्रित्याह । वृत्तमित्यादि । वृत्तं विधिप्रतिषेधरूपं वर्त्तनं चारित्रमेव खलुरवधारणार्थः तच्चेहामंदारंभाश्रवरूपाद्धि-

किमेवं सर्व्वप्रयोजनसिद्धिद्वारेण भगवान् संस्तूयत इत्याह ॥

**चिंतामणिः परोऽसौ तेनैवं भवति समरसापत्तिः ॥ सैवेह योगिमाता निर्वाणफलप्रदा प्रोक्ता ॥ १५ ॥**

य० चिंतारत्नं चिंतामणिः परः प्रकृष्टोऽसौ भगवान् सर्वज्ञस्तेन भगवतैवमागमबहुमानद्वारेण भवति जायते। समरसापत्तिः समतापत्तिः । आगमाभिहितसर्व्वज्ञस्वरूपोपयोगोपयुक्तस्य तदुपयोगाऽनन्यवृत्तेः परमार्थतः सर्वज्ञरूपत्वाद्ग्राह्यालंबनाकारोपरक्तत्वेन मनसः समापत्तिर्ध्यानविशेषरूपा तत्फलभूता वा समरसापत्तिरित्यभिधीयते । यथोक्तं योगशास्त्रे । क्षीणवृत्तेरभिजात्यस्येवमणेर्ग्राह्यग्रहीतृग्रहणेषु तत्स्थतदनुगतासमापत्तिः सैषेह प्रस्तुता समापत्तिरभिसंवध्यते योगिमाता योगिजननी योगी चेह सम्यक्त्वादिगुणः पुरुषः । यथोक्तं "सम्यक्त्वज्ञानचारियोग, सद्योग उच्यते । एतद्योगाद्धियोगी स्यात्परमब्रह्मसाधकः" सैव विशिष्यते निर्व्वाणफलप्रदा निर्व्वाणकार्यप्रसाधनी प्रोक्ता तद्वेदिभिराचार्यैः ॥ १५ ॥

उ० यतः चिंतामणिरित्यादि। असौ भगवान् परः प्रकृष्टः चितामणिर्वर्त्तते तेनेयं सर्वत्र पुरस्क्रियमाणागमसंबंधोद्बोधितसंस्कारजनितभगवद्हृदयस्थता समरसापत्तिः सपतापत्तिर्भवति रसशब्दोत्र भावार्थः भगवत्स्वरूपोपयुक्तस्य तदुपयोगानन्यवृत्तेः परमार्थतस्तद्रूपत्वाद्ग्राह्यालंबनाकारोपरक्तत्वेन ध्यानविशेषरूपा तत्फलभूता वा मनसः समापत्तिरभिधीयते तथोक्तं योगशास्त्रे "क्षीणवृत्तेरभिजात्यस्येव मणेर्ग्राह्यग्रहीतृग्रहणेषु तत्स्थतदंजनता समापत्तिः" । साच मयि तद्रूपं स एवाहमित्यादिध्यानोल्लिख्यमानवैज्ञानिकसंवंधविशेषरूपा सैव समापत्तिर्योगिनः सम्यक्त्वादिगुणपुरुषस्य माता जननी निर्वाणफलप्रदा च प्रोक्ता तद्वेदिभिराचार्यैः ॥ १५ ॥

वालादीनां सद्धर्म्मदेशनाविधिरधिकृतस्तमेव निगमयन्नाह ॥

**इति यः कथयति धर्मं विज्ञायौचित्ययोगमनघमतिः। जनयति स एन मतुलं श्रोतृपु निर्वाणफलदमलम् १६**

य० इति यः कथयति धर्म्मं एवमुक्तनीत्या यो गुरुर्द्धर्म्मं कथयति विज्ञाय ज्ञात्वा औचित्ययोगं औचित्यव्यापारं तत्संबंधं वा । अनघमतिर्निर्दोपबुद्धिर्जनयति स गुरुरेनंधर्म्ममतुलमनन्यसदृशं श्रोतृपु शुश्रूपाप्रवृत्तेपु निर्व्वाणफलदं मोक्षफलप्रदमलमत्यर्थमिति ॥ १६ ॥ २ ॥

उ० उपसंहरन्नाह । इतीत्यादि । इत्युक्तप्रकारेण यो गुरुर्धर्मं कथयति विज्ञायौचित्येन योगं परिणामं वालादिपरिणामौचित्यमितियावदनघमतिर्निर्दोपवुद्धिर्जनयति स गुरुरेनं धर्ममतुलमनन्यसदृशं श्रोतृपु शुश्रूपाप्रवृत्तेपु निर्वाणफलदमलमत्यर्थमवंध्यवीजवपनसामर्थ्यादिति ज्ञेयम् ॥ १६ ॥ २ ॥

॥ इति द्वितीयं पोडशकम् ॥

---

वालादीनां सद्धर्म्मदेशनाविधिर्गुरोरुक्तसूत्रधर्म्मस्वलक्षणाभिधित्सया संबंधमुपरचयति । प्रकरणकारः ॥

**अस्य स्वलक्षणमिदं धर्मस्य बुधैः सदैव विज्ञेयम् ॥ सर्वागमपरिशुद्धं यदादिमध्यांतकल्याणम् ॥ १ ॥**

य० अस्य धर्म्मस्य स्वलक्षणं लक्ष्यते तदितरव्यावृत्तं वस्त्वनेनेतिलक्षणं। स्वं च तल्लक्षणं चेति स्वलक्षणमिदंवक्ष्यमाणं बुधे-

माधुनिकअमितजनतामनःकल्पितां तत्त्वविचारणा निर्मूला प्रदर्शयितुञ्च श्रीमदुपाध्यायेन विशेषभावाववोधिनीस्वीकृतशास्त्रार्थवालसङ्ग्रहा वितेने । पुरेद षोडशकं श्रीमद्यशोभद्रटीकया व्यराजि पुनश्चास्यापरा टीका श्रीमदुपाध्यायेन कथं विहिता ? समाधानञ्चात्रैव विभावयन्तु निज्ञा. । मूलग्रन्थमुद्दिश्यानेके पण्डितवर्य्याः पृथक् पृथगर्थख्यापकाष्टीका रचयन्ति तेन च मूलग्रन्थमहिमाप्रभूतप्रौढतामवगाहते.

रसनाग्रसंस्थितभारतीनामनेकेषां विदुषा विभिन्नक्षयोपशमतारतम्ययोगेन मूलश्लोकोक्ता विविधाशयाश्च सङ्गृह्यन्ते । तस्माच्च ग्रन्थोक्तश्लोकाना भावार्थप्रकाशो याथातथ्येनानुबोभूय्यते. मूलग्रन्थप्रणेतृश्लोकभावार्थं तत्तत्क्षेत्रकालानुसारेण गृहीतावतारा विद्वासः सर्वजनीनहिताभिलाषिणः प्रस्तुतसमयवर्त्मजुषः समीचीन विशदीकुर्वन्ति, क्षयोपशमज्ञानापेक्षयाच सर्वे विद्वासस्तारतम्य निर्वहन्ति, केचिन्मन्दप्रज्ञानामुपकारं समीहमानाः संक्षेपेण मूलार्थ विवेचयन्ति, केचिच्च विद्वज्जनबोधकारिका शास्त्रार्थवादपुरस्सरामनेकसुयुक्तिगुम्फिता सविस्तरा टीकां विदधति, कश्चिच्च विद्वान् मूलार्थप्ररूपणा स्वकीयमत्यनुसरणशीलः प्रदीपवन्नूतनानुभवार्थप्रकाशिनी तन्तन्यते कश्चिच्च निजक्षयोपशमज्ञानबलेन तस्यैव विषयस्य प्रकारान्तरेण विशेषार्थप्रकाशन चरीकर्त्ति । तस्मादेवहेतोर्मूलसूत्राणि समुद्दिश्य तत्त्वार्थसूत्रादिष्वपि प्रभूतैः पण्डितैः देशकालानुसारेण ग्रथिता सङ्क्षिप्ताऽसङ्क्षिप्तभावार्था विविधाष्टीका समुपलभ्यन्ते तन्न्यायावलम्बनेनात्रापि विद्वद्द्वयकृतटीका शङ्कानिर्मूलतामगात्. तथैवागामिनि समयेऽन्ये विद्वासो यदि नूतनाष्टीका रचयन्ति तत्र नाश्चर्य मन्तव्य विशेषज्ञै । श्रीमद्धरिभद्रसूरिकृत **षोडशकप्रकरणपर्यालोचनेन** तत्कालीनजनानामिदानीन्तनवर्त्तमानरामयजुषाञ्च तत्तद्विषयेषु कीदृग् विधाऽभिरुचिर्विद्यते तस्य सम्यग्ज्ञानं विद्वज्जनाना हृदि प्रतिभासते । षोडशकप्रकरणेषु च सम्प्रति कस्य विषयस्य प्राधान्याप्राधान्यमभिव्यज्यते तत्सकल विद्वज्जना अनुमानेन

क्रियातया ततः सकाशाद्विगमस्ततस्तस्मादयं मलविगमः क्रियायाः कारणे कार्योपचारादत एव सत्क्रियारूपमलविगमात् पुष्टिशुद्धिश्च वक्ष्यमाणा चित्तस्य संभवति ॥ ३ ॥

पुष्टिशुद्ध्योर्लक्षणं दर्शयति ॥

**पुष्टिः पुण्योपचयः शुद्धिः पापक्षयेण निर्मलता । अनुबंधिनि द्वयेऽस्मिन् क्रमेण मुक्तिः परा ज्ञेया ॥४॥**

य० उपचीयमानपुण्यता पुष्टिरभिधीयते शुद्धिः पापक्षयेण निर्म्मलता पापं ज्ञानावरणीयादि च सम्यक्ज्ञानादिगुणविघातहेतुर्घातिकर्म्मोच्यते तत्क्षयेण यावती काचिद्देशतोऽपि निर्म्मलता संभवति । सा शुद्धिरुच्यते अनुबंधः संतानः प्रवाहो विच्छेद इत्यनर्थांतरं । स विद्यते यस्य द्वयस्य तदिदमनुबंधि तस्मिन् पुष्टिशुद्धिद्वयेऽस्मिन् प्रत्यक्षीकृते सति क्रमेणानुपूर्व्या पुण्योपचयपापक्षयाभ्यां प्रवर्द्धमानाभ्यां तस्मिन् जन्मनि भवान्तरेषु वा प्रकृष्यमाणवीर्यस्य मुक्तिः परा तात्त्विकी सर्व्वकर्म्मक्षयलक्षणा ज्ञेयेति ॥ ४ ॥

उ० पुष्टिशुद्ध्योर्लक्षणं फलं चाह । पुष्टिरित्यादि । पुष्टिः पुण्योपचयः प्रवर्द्धमानपुण्ययोगः शुद्धिः पापक्षयेण सम्यग्ज्ञानादिगुणविघातकघातिकर्मव्यपगमेन निर्मलता यावती काचिद्देशतोऽपि निरुपाधिकताऽस्मिन् पुष्टिशुद्धिलक्षणे द्वयेऽनुबंधिन्यविच्छिन्नप्रवाहे सति क्रमेण तत्प्रकर्षप्राप्तिपरिपाट्या तस्मिन् जन्मनि भवान्तरेषु वा प्रकृष्यमाणवीर्यस्य जीवस्य मुक्तिः परा तात्त्विकी सर्वकर्मक्षयलक्षणा ज्ञेया ॥ ४ ॥

तस्मिश्च काले चैत्यवासिश्रावकाणा जिनमन्दिरप्रतिमापूजादिशै-
निर्णयन्ति श्रीमद्धरिभद्रसूरि समये “ चैत्यवासिना ” बहुतरा सङ्ख्याऽश्रयत । तस्मिश्च काले चैत्यवासिश्रावकाणा जिनमन्दिरप्रतिमापूजादिशै-
थिल्य पूर्वसूरिकृतग्रन्थवादेनाऽनुमीयते, तन्निरासार्थं गृहीतमहाव्रताना श्रमणाना भावपूजाधिकारित्वमनवद्य समस्तीत्यादिभावना निज-
हृदयाब्जे भावयता श्रीमद्धरिभद्रसूरिणा गाम्भीर्यगरिम्णा पूजास्वरूपप्रकरणस्य पूजाफलप्रकरणस्यच समीचीन विशुद्धतरभावमनल्पसार
विवेचनमकारीतिहेतोरपि सम्भावना क्रियते ॥ धर्मपरीक्षा मीमासायाम्, श्रीमदुपाध्यायस्त्वतीवकृतावतारस्तत्प्रतिपादकहेतुवृन्दान् सयुक्ति
कान् प्राकाशयत् । देशनाप्रकरणोक्तगूढभावार्थमाधुर्यन्त्वलौकिकमेव विभाव्यते. समुचितचारित्रविभूषणैर्व्रतिभि. कदा कस्मिन् प्रदेशे
केषामग्रे यथाधिकारं भव्यजनोद्दिधीर्षया देशनादान विधेयमिति स्फुटतरं तत् स्वरूप विज्ञातुमिद देशनाप्रकरणमवश्यमनायासेन दृक्पथ
नेतव्यम्—“ धर्मलक्षणाभिख्ये षोडशके ” “ यथानाम तथा गुणा ” इति न्यायं सत्यापयितु समानि धर्मलक्षणानि विशदीकृत्य विनिवे-
शितानि विलोक्यन्ते, धर्मेच्छुलिङ्गीया विषयाश्चागाधगाम्भीर्या अनघगुणभाजो नितान्तरसनिर्भरास्तत्त्वबुभुत्सितानामश्रमेण सदर्थप्राप्तिहेतव.
प्रतिश्लोकार्थस्फुटतामनपाकृत्य विवेचिता सन्ति । लोकोत्तरतत्त्वप्राप्तिनामनि षोडशके ये ये तत्त्वाशास्तत्रभवता सूरिणोपनिबद्धास्तान्यथा
यथाऽवगाह्य सूक्ष्मतराप्रतिमप्रतिभाप्रकाशेन विलोचनातिथीन् प्रकुर्वन्ति ये मेधाविनो भावाऽविनाभाविनस्तथातथैतदीयमनन्तगौरवत्त्वमत्युच्चा-
शयत्वञ्च तैरेवास्वाद्यतेतराम् । जिनमन्दिरञ्च कीदृग् विधिना निर्मापयितव्य तदधिकारोऽत्यल्पीयसा श्लोकसम्बन्धेन प्रतिपादितस्तत्स्पष्टीकरणञ्च
जिनमन्दिरषोडशकगतमप्रमेय प्रमोद जनयति जनाना चेतसि । जिनबिम्ब कदा केन कीदृग् भावेन विधातव्यमित्यादिरमणीयतरभावार्थस

उ० प्रणिधानादिभेदानेवाह । प्रणिधीत्यादि । प्रणिधिश्च प्रवृत्तिश्च सिद्धिश्च विनियोगश्च विघ्नजयश्च तएव भेदास्ताना-श्रित्य प्रायः प्राचुर्येण शास्त्रेषु धर्मज्ञैः शुभाशयः पञ्चधाख्यातोऽत्र पुष्टिशुद्ध्यनुबंधप्रक्रमे विधौ विहिताचारे ॥ ६ ॥

तत्र प्रणिधानलक्षणमाह ॥

**प्रणिधानं तत्समये स्थितिमत्तदधः कृपानुगं चैव । निरवद्यवस्तुविषयं परार्थनिष्पत्तिसारं च ॥ ७ ॥**

य० प्रणिधानं विशेष्यं शेषपदानि विशेषणानि तत्समये प्रतिपन्नविवक्षितधर्म्मस्थानमर्यादायां स्थितिमत्प्रतिष्ठितं अविचलितस्वभावं तदधःकृपानुगं चैव स्वप्रतिपन्नधर्म्मस्थानस्याधोऽधस्ताद्ये वर्तन्ते जीवा न तावतीं धर्म्मपदवीमाराधयन्ति तेषु कृपया करुणया अनुरागमनुगतं तेषु करुणापरं । न तु गुणहीनत्वात्तेषु द्वेषसमन्वितं निरवद्यवस्तुविषयं निरवद्यं सावद्यपरिहारेण यद्वस्तु धर्म्मगतं तद्विषयो यस्य परार्थनिष्पत्तिसारं च । परोपकारनिष्पत्तिप्रधानं चैवं स्वरूपं प्रणिधानमवसेयं ॥७॥

उ० तत्र प्रणिधानलक्षणमाह । प्रणिधानमित्यादि । प्रणिधानं तद् यत्तत्समयेऽधिकृतधर्मस्थानप्रतिज्ञासमये स्थितिमत्तत्सिद्धिं यावन्निमित्तप्रतिष्ठं संस्कारात्मनाऽविचलितस्वभावं च तदधः स्वप्रतिपन्नधर्मस्थानादधस्तनगुणस्थानवर्तिजीवेषु कृपानुगं करुणानुयायि चैव न तु हीनगुणत्वात्तेषु द्वेषान्वितं च पुनः परार्थनिष्पत्तिसारं परोपकारसिद्धिप्रधानं सर्वस्या अपि सतां प्रवृत्तेरुपसर्जनीकृतस्वार्थप्रधानीकृतपरार्थत्वात् निरवद्य यद्वस्तु अधिकृतधर्मस्थानसिद्ध्यनुकूलप्रतिदिनकर्त्तव्यं तद्विषयं तद्विषयध्यानम् ॥ ७ ॥

वलितमेतज्जिनबिम्बाख्यं षोडशकमपि कांस्कान् प्रेक्षकान्नोल्लासयति । प्रतिष्ठाविधिषोडशकरान्दर्शितवस्तुस्वरूपं रम्यगूगम्भीरतरभावार्थानुगेयमभिद्दश्यते । पूजास्वरूपषोडशकेच्च पूजास्वरूपमनेकविधं गहरार्थतया स्पष्टीचक्रे—

साम्प्रतकालीना लीनमानसाः श्रीमत्तीर्थकरपूजाविधौ यद्येतदीया रागम्रां व्याकृतामर्थपदवी रागवलोक्य सादरं हृदि निदधति चेच्छिशुद्धपूजाप्रभावप्रकाशो विशेषतो जनमनोगतो जगति प्रसरेत्। पूजाफलषोडशकश्च प्रभुमूर्तिपूजाविधायी ना कीदृक्षं तज्जं फलमश्नुते कामवस्थामवलम्बते चैतद्विवेचनं समासेन स्फुटतरं निवेदयति.

श्रुतज्ञानलिङ्गषोडशके च मिथ्यात्वदुर्ध्वान्तनिर्हरणतिग्मदीधितिश्रुतज्ञानमुपक्रम्य विविधकलाकौशलयसुवासितचित्तः समासादितयौवनो नरो निकामं प्रमत्तयुवतिजनप्रगीतगीतमाधुर्य श्रोत्रपुटेन निपीय यथा रंरज्यते, तस्मादप्यधिकतरो रागः श्रुतज्ञानं शृण्वतां मतिमज्जनानांचेतःस्ववलम्बोऽभिजायते, क्षान्त्यादिगुणनीरधौ पूज्यतमे गुरुजनेऽपि च तच्छ्रोतॄणामधिकेव रोऽव्यबुद्धिः प्रकाशते, इत्याद्यनेकविधविषयस्वरूपं स्फुट व्यावर्णि । दीक्षाधिकारषोडशके च दीक्षाग्रहणे कीदृग् लक्षणलक्षितः पुमानधिकारवान् भवति २ तत्स्वरूपमनेकधाऽनन्यहेतुश्च येन गभीरतरलक्ष्यार्थग्राहिणा निरपादि, दीक्षाधिकारानर्हस्य कस्यचिद्दीक्षाप्रदान विधीयते तद्वसन्तत्तौ बालजनरञ्जनायकृत्रिमनृपप्रतिकृतिवद्विज्ञातव्य सुज्ञजनैरित्यादि बहुधाविषयस्वरूपं व्यावर्णितम् । गुरुविनयषोडशकेच्च गुरुशुश्रूषैककार्योन्मुखैरन्तेवासिभिश्च कीदृक् प्रकारेण गुरु विनयः सम्पादनीयः सद्धर्ममूलं विनयोऽस्तीत्यादि बहुविधता प्ररूपिता दरीदृश्यते । योगभेदाख्ये षोडशके च योगगतभेदानां प्रतिपादनं षोडशभिः श्लोकैः पार्थक्येन व्यधायि । ध्येयस्वरूपषोडशकन्न यथार्थतावलीढ ध्यातृध्येयस्वरूपमक्लिष्टतरभावार्थ प्रद्योतयति । समरसाभिधेये

उ० एवमेतान् प्रणिधानादीनुक्त्वा एषां भावत्वसमर्थनायाह आशयेत्यादि। एते पूर्वोक्ताः सर्वेपि कथंचित् क्रियारूपत्वेऽपि तत्त्वतः परमार्थतस्तदुपलक्ष्या आशयभेदा अवगन्तव्याः। अयं पञ्चप्रकारोऽप्याशयो भाव उच्यते उपयोगस्य भावनालक्षणत्वादनेन भावेन विना चेष्टा कायवाङ्मनोव्यापाररूपा तुच्छा द्रव्यक्रियात्वेन फलाजननीत्यर्थः॥ १२॥

**अस्माच्च सानुबन्धाच्छुद्धयन्तोऽवाप्यते द्रुतं क्रमशः। एतदिह धर्मतत्त्वं परमो योगो विमुक्तिरसः॥१३॥**

य० अस्माच्च पूर्वोक्ताद्भावादाशयपञ्चकरूपात्सानुवंधात्। अनुवंधः सन्तानस्तेन सह वर्त्तते यो भावः स सानुवंधस्तदविनाभूतः। स चाव्यवच्छिन्नसन्तानस्तस्मादेवंविधाभावाच्छुद्धेरन्तःप्रकर्षः शुद्धयन्तो वाप्यते प्राप्यते द्रुतमविलंबितं प्रभूतकालात्ययविगमेन क्रमशः क्रमेणानुपूर्व्या तस्मिन् जन्मन्यपरस्मिन्वा कर्म्मक्षयप्रकर्षो लभ्यते। ननु चैष एव भावो धर्म्मपरमार्थ आहोस्विदन्यद्धर्म्मतत्त्वमित्यारेकाया परस्य निर्व्वचनमाह एतदिह धर्म्मतत्त्वं अत्र यद्यपि भावस्य प्रस्तुतत्वादेतदित्यत्र पुल्लिङ्गतायामेष इति निर्देशः प्राप्नोति। तथापि धर्म्मतत्त्वमित्यस्य पदस्य प्रधानापेक्षया नपुंसकनिर्द्देशोऽर्थस्तु एतदिह प्रस्तुतं भावस्वरूपं धर्म्मतत्त्वं नान्यत् परमो योग इति। अयं भावः परमो योगो वर्त्तते। स च कीदृक् विमुक्तिरसः विशिष्टा मुक्तिर्व्विमुक्तिस्तद्विषयो रसः प्रीतिविशेषो यस्मिन्योगे स विमुक्तिरसः विमुक्तौ रसोऽस्येति वा गमकत्वात्समासोऽथवा पृथगेव पदान्तरं न विशेषणं तेनायं भावो विमुक्तौ रसः प्रीतिविशेषो विमुक्तिरस उच्यते। एतदुक्तं भवति। भाव एव धर्म्मतत्त्वं भाव एव च परमो योगो भाव एव च विमुक्तिरस इति॥ १३॥

उ० भावाच्च यत् स्यात्तदाह। अस्माच्चेत्यादि। अस्माच्चाशयपञ्चकरूपाद्भावात्सानुवंधादव्यवच्छिन्नसंतानात् क्रमशः

गुरुसंयोगसम्यक्त्वलाभग्रहणं बीजाधानं धर्मतरोर्बीजस्य पुण्यानुबन्धिपुण्यस्य न्यास आदिनांकुरपत्रपुष्पफलपरिग्रहः तेषां भावेनोत्पादेनालमत्यर्थं धर्मसिद्धिफलदं वर्तते। जनप्रियस्य हि धर्मः प्रशंसास्पदं भवति ततश्च लोकानां बीजाधानादिधर्मसिद्धिरिति तत्प्रयोजकतया जनप्रियत्वं युक्तमित्युत्तानार्थः ॥ ७ ॥

एवं धर्म्मतत्त्वलिंगान्यौदार्यादीनि विधिमुखेन प्रतिपाद्य धर्म्मतत्त्वव्यवस्थितानां पुंसां व्यतिरेकमुखेन विषयतृष्णादीनां स्वरूपं प्रतिपिपादयिषुर्दृष्टान्तपूर्व्वकं विकाराभावमाविर्भावयितुमाह ॥

**आरोग्ये सति यद्वद् व्याधिविकारा भवन्ति नो पुंसाम् । तद्वद्धर्मारोग्ये पापविकारा अपि ज्ञेयाः ॥८॥**

य० आरोग्ये रोगाभावे सति जायमाने यद्वदिति । तथा व्याधिविकारा रोगविकारा भवन्ति नो पुंसामारोग्यवतां तद्वदिति । तथा धर्म्मारोग्ये धर्म्मरूपमारोग्यं तस्मिन् सति पापविकारा अपि वक्ष्यमाणा न भवन्तीति विज्ञेयाः ॥ ८ ॥

उ० एवं प्राथमिकगुणरूपाणि धर्मतत्त्वस्य लिंगान्यभिधाय दोषाभावरूपाणि तानि वक्तुमुपक्रमते । आरोग्य इत्यादि । आरोग्ये रोगाभावे सति यद्वदिति यथा व्याधिविकारा॰ पुंसां नो भवन्ति तद्वदिति तथा धर्मलक्षणे आरोग्ये सति पापविकारा अपि विज्ञेया अभवनशीला इति शेषः ॥ ८ ॥

पापविकारा ये न भवन्ति तान्विशेषतो निर्दिशति ॥

**तन्नास्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोहः । अरुचिर्न धर्मपथ्ये न च पापा क्रोधकण्डूतिः ॥९॥**

य० तदेवं स्थिते धर्म्मतत्त्वयुक्तस्य नास्य पुरुषस्य विषयतृष्णा वक्ष्यमाणलक्षणा प्रभवति जायते उच्चैरत्यर्थं न दृष्टिसं-

दोषविवेकनिपुणा विद्वांसः सादरावलोकनेन समीकुर्वन्त्विति विज्ञप्ति । एतत्प्रकरणोद्गतभावार्थो जगतीतलमनन्तरागद्वमभिव्याप्नोतु जगज्जनाश्च प्रशान्तभाविनो भवन्त्विति शम्,

श्रीमज्जैनधर्म्मानुरक्त सुरतपत्तनीय लालचन्द्रसूनु देवचन्द्र श्रेष्ठिवर्य्यनियोजितजीर्णशास्त्रोद्धारकफण्डद्वारेनतत्पुस्तकं मुद्रयित्वा समुद्धृत तेनाऽयं प्रशस्त धन्यवादमर्हति " परोपकाराय सतां विभूतयः । " इति वचनात् ॥

जनाः सर्वे सुखं यान्तु, ग्रन्थस्याऽस्य प्रवाचनात् श्रवणान्मननाच्चैवं, भाषते बुद्धिसागरः ॥ १ ॥

ॐ शान्तिः शान्तिः शान्तिः ।

मुम्बाइबन्दर, लालबाग भाद्र पद कृष्णपक्ष द्वादश्यां भौमवासरे विनिर्मितमिदम्—

य० इतरस्य स्त्रीमद्यद्यूतादिव्यसनवतो नार्पणं तथा क्रियते यथाऽनघस्य युक्त्या लोकन्यायेन वक्तव्यमेव मूल्यमिति इति एवं स्वरूपं मूल्यमिदं वक्तव्यं काले च प्रस्तावे च दानमुचितं मूल्यस्येति गम्यते। शुभभावेनैव नाशुभभावेन विधिपूर्व्वमविधिपरिहारेण ॥ ३ ॥

उ० अनघस्येति विशेषणव्यवच्छेद्यं साक्षादाह। नेत्यादि। इतरस्य स्त्रीमद्यद्यूतादिव्यसनवतोऽर्पणं तथा न कर्त्तव्यं यथाऽनघस्यानधिकारिणि तदर्पणस्यान्याय्यत्त्वात् युक्त्यैव लोकन्यायेनैवेत्येवं स्वरूपं यथावस्थं मूल्यं वक्तव्यं नतु न्यूनाधिकं काले च प्रस्तावे च दानमुचितं मूल्यस्येति गम्यते शुभभावेनैव विधिपूर्वमविधिपरिहारेण ॥ ३ ॥

सव्यसनं प्रति किमेवमुपदिश्यत इत्याह॥

**चित्तविनाशो नैवं प्रायः सञ्जायते द्वयोरपि हि। अस्मिन् व्यतिकर एष प्रतिषिद्धो धर्मतत्त्वज्ञैः ॥ ४ ॥**

य० चित्तविनाशः चित्तकालुष्यं, नैवं, उक्तनीत्या प्रायो बाहुल्येन सञ्जायते द्वयोरपि हि कारयितृवैज्ञानिकयोरस्मिन्प्रस्तुते व्यतिकरे संबन्धे एष चित्तविनाशश्चित्तभेदः प्रतिषिद्धो निराकृतो धर्म्मतत्त्वज्ञैर्द्धर्म्मस्वरूपवेदिभिः ॥ ४ ॥

उ० किमित्येवं सव्यसनस्यार्प्पणं निषिध्यत इत्यत्र हेतुमाह। चित्तेत्यादि। एवमुक्तनीत्या चित्तविनाशश्चित्तकालुष्यं द्वयोरपि हि कारयितृवैज्ञानिकयोरनुशयोपालंभाभ्यां न सञ्जायते प्रायो बाहुल्येन अस्मिन् व्यतिकरे प्रस्तुतशुभकार्यारंभे एष चित्तविनाशः प्रतिषिद्धो विपरीतफलत्त्वेनोपदिष्टो धर्म्मतत्त्वज्ञैर्द्धर्म्मस्वरूपवेदिभिः ॥ ४ ॥

# षोडशकस्यानुक्रमदर्शनयन्त्रम्

उ० ननु किं रत्नकनकादिबिम्बकरणे विशिष्टं फलमाहोस्वित्परिणामविशेषादिति जिज्ञासायामाह । बिम्बमित्यादि । बिम्बं प्रतिमारूपं महत्प्रमाणतः सुरूपं विशिष्टाङ्गावयवसन्निवेशसौन्दर्यं कनकादिमयं च सुवर्णरत्नादिमयं यः खल्वयं विशेषो बाह्यवस्तुगतो नास्माद्विशिष्टं फलं बाह्यवस्तुविशेषानुविधायी न फलविशेष इत्यर्थः तु पुनस्तद्विशिष्टं फलमिह प्रक्रमे आशयविशेषाद् यत्र भावोऽधिकस्तत्र फलमप्यधिकमिति हृदयम् । भावविशेषाधायकतया च बाह्यविशेषोऽप्याद्रियत एव तदुक्तं व्यवहारभाष्ये "लक्खणजुत्ता पडिमा पासाईआ समत्तलङ्कारा । पह्लायइ जह व मणं तह णिज्जरमो वियाणाहित्ति" ॥१२॥

आशयविशेषाद्विशिष्टं फलमित्युक्तं स एव आशयविशेषो यादृक्षः प्रशस्तो भवति तादृक्षमाह ॥

आगमतत्रः सततं तद्वद्भक्त्यादिलिङ्गसंसिद्धः । चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशेषः ॥ १३ ॥

य० आगमतन्त्र आगमपरतन्त्र आगमानुसारी सततमनवरतं, स आगमो विद्यते येषां ते तद्वन्तस्तेषु भक्त्यादीनि भक्तिबहुमानविनयपूजनादीनि यानि लिङ्गानि तैः संसिद्धो निश्चितस्तद्वद्भक्त्यादिलिङ्गसंसिद्धः । चेष्टायां व्यापारकरणे । तत्स्मृतिमानागमस्मृतियुक्तः शस्तः खलु प्रशस्तो भवत्याशयविशेषः परिणामभेदः ॥ १३ ॥

उ० आशयविशेषः कीदृगिष्ट इत्याह । आगमेत्यादि । आगमतन्त्र आगमानुसारी सततमनवरतं तद्वतामागमवतां भक्त्यादीनि यानि लिङ्गानि तैः संसिद्धो निश्चितः भक्त्यादीत्यादिना विनयपूजनादिग्रहः चेष्टायां प्रवृत्तौ तत्स्मृतिमानागमस्मृतियुक्तः शस्तः प्रशस्तः खल्वाशयविशेषः परिणामभेदः ॥ १३ ॥

स्वक्षेत्रचतुर्विंशतिविषयत्वात्। इयं च भरतैरावतयोः । सप्तत्यधिकशतस्य तु महाविदेहभरतैरावतेषूत्कृष्टकालमङ्गीकृत्य चरमेह महाप्रतिष्ठेति गुणनिष्पन्नाभिधाना ॥ ३ ॥

आह किमियं प्रतिष्ठा नाम, किं मुख्यस्यैव देवताविशेषस्य मुक्तिरूपापन्नस्याहोस्विदन्यस्य संसारवर्त्तिनः । तत्र न तावन्मुख्यस्य युज्यते। तस्य मन्त्रादिभिः संस्कारविशेषैरानयनासंभवात्तैरानीयमानस्य च मुक्तत्त्वविरोधादन्यथास्य तत्रापि संसारवर्त्तिनो नियमेन देवजात्यनुप्रविष्टस्य न सन्निधानं संस्कारविशेषैरपि संभवति। कादाचित्कं तु सन्निधानं न प्रतिष्ठां प्रयोजयति सर्व्वदा तस्याभावादिति पर्यनुयोगे सत्यात्मीयभावस्यैव विशिष्टस्य प्रतिष्ठात्त्वप्रतिपादनायाह ॥

**भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात्। स्वात्मन्येव परं यत्स्थापनमिह वचननीत्योच्चैः ॥४॥**

य० भवति च खलु प्रतिष्ठा शास्त्राभिमता निजभावस्यैव कारयितृभावस्यैव देवतोद्देशात् मुख्यदेवतोद्देशेन स्वात्मन्येव स्वजीव एव परं प्रधानं यद्यस्मात्स्थापनमिह प्रतिष्ठा न निजभावं देवताविषयमन्तरेणान्यस्य वचननीत्या आगमनीत्या उच्चैरत्यर्थं बाह्यजिनबिम्बादिगता तु प्रतिष्ठा बहिर्निजभावोपचारद्वारेण निज एव हि भावो मुख्यदेवताविशेषस्वरूपालम्बनः स एवागमित्यभेदोपचारेण विदुषां भक्तिमतां पूज्यतापदवीमासादयति ॥ ४ ॥

उ० अथ किमियं प्रतिष्ठानाम किं मुख्यस्य देवताविशेषस्य मुक्तिगतस्य सन्निधानमुतान्यस्य तदनुजीविनः संसारस्थस्य नाद्यः मुक्तिगतस्य मन्त्रादिसंस्कारविशेषैरानयनासंभवान्नापि द्वितीयः संसारस्थस्यापि देवजात्यनुप्रविष्टस्य संस्कारविशेषैर्नियमतः सन्निधानादर्शनात्कादाचित्कस्य च तस्य प्रतिष्ठाऽप्रतिष्ठाऽप्रयोज्यत्वादिति पर्यनुयोगे सत्यात्मीयभावस्यैव विशि-

कथं पुनः स्तोत्रेभ्यः पूजा भवतीत्याह ॥

**शुभभावार्थं पूजा स्तोत्रेभ्यः स च परः शुभो भवति । सद्भूतगुणोत्कीर्त्तनसंवेगात्समरसापत्त्या ॥८॥**

य० शुभभावार्थं पूजा शुभभावनिमित्तं पूजा सर्व्वापि पुष्पादिभिः स्तोत्रेभ्यः स्तुतिभ्यः सच भावः परः प्रकृष्टः शुभो भवति शुभहेतुर्ज्जायते । एवं च पुष्पवस्त्रादीनामिव स्तोत्राणामपि प्राक्तनाध्यवसायापेक्षया शुभतरपरिणामनिबन्धनत्त्वेन पूजाहेतुत्त्वं सिद्ध्यति । कथं पुनः स्तोत्रेभ्यः शुभो भाव इत्याह सद्भूतगुणोत्कीर्त्तनसंवेगात् । सद्भूतानां विद्यमानानां तथ्यानां च गुणानां ज्ञानादीनां यत्कीर्त्तनं तेन संवेगो मुक्त्यभिलाषस्तस्मात् समरसापत्त्या समभावे रसोऽभिलाषो यस्यां सा समरसा सा चासावापत्तिश्च प्राप्तिरधिगतिरधिगम इत्यनर्थान्तरं तया हेतुभूतया समरसापत्त्या परमात्मस्वरूपगुणज्ञानोपयोगरूपया परमार्थतस्तद्भ(द्भा)वनेन तदुपयोगानन्यवृत्तितया स्तोत्रेभ्य एव शुभो भावो भवतीतितात्पर्य्यम् ॥ ८ ॥

उ० कथं पुनः स्तोत्रेभ्यः पूजा स्यादित्याह । शुभेत्यादि । शुभभावार्थं पूजा सर्वापि पुष्पादिभिरिष्यते स च भावः स्तोत्रेभ्यः परः प्रकृष्टः शुभो भवति सद्भूतानां विद्यमानानां गुणानां ज्ञानादीनां यत्कीर्त्तनं तेन संवेगो मोक्षाभिलाषस्ततः समे भावे रसोऽभिलाषो यस्यां तादृश्यापत्त्या प्राप्त्या हेतभूतया परमात्मगुणोपयोगेन परमार्थतस्तदनन्यवृत्तिलक्षणया ततश्च 'पुष्पादितः शुभतरपरिणामनिबन्धनत्त्वेन स्तोत्राणां विशिष्टपूजाहेतुत्त्वं सिद्धं भवति' ॥ ८ ॥

अधुना अन्यथा पूजाया एव भेदत्रयमाह ॥

**कायादियोगसारा त्रिविधा तच्छुद्ध्युपात्तवित्तेन । या तदतिचाररहिता सा परमान्ये तु समयविदः ॥९॥**

# ॥ श्रीयशोभद्रसूरिकृतटीकायुक्तषोडशकम् ॥

प्रणिपत्य जिनं वीरं सद्धर्मपरीक्षकादिभावानाम्॥ लिंगादि भेदतः खलु वक्ष्ये किंचित्समासेन ॥ १ ॥

ॐ नमः सर्व्वज्ञाय । अमृतमिवामृतमनघं जगाद जगते हिताय यो वीरः। तस्मै मोहमहाविषविघातिने स्तान्नमः सततं ॥ १ ॥ यस्याः संस्मृतिमात्राद् भवन्ति मतयः सुदृष्टपरमार्थाः ॥ वाचश्च बोधविमलाः सा जयतु सरस्वती देवी ॥ २ ॥ इह भवजलधिनिमग्नसत्त्वाभ्युज्जिहीर्षाभ्युद्यतेन स्वहितसंपादननिपुणेन गुरुलाघवचिन्तावता प्रश्नार्थव्याकरणसमर्थेन विदुषा सद्धर्म्मपरीक्षायां यत्नो विधेयः । सा च परीक्षकमंतरेण न संभवति, तदविनाभावित्वात् परीक्षायाः । सद्धर्म्मपरीक्षकादि भावप्रतिपादनार्थं चार्याषोडशकाधिकारप्रतिबद्धं प्रकरणमारेभे हरिभद्रसूरिस्तस्य चादावेव प्रयोजनाभिधेयसंबंधप्रतिपादनार्थमिदमार्यासूत्रं जगाद ॥ प्रणिपत्य नमस्कृत्य, जिनं जितरागद्वेषमोहं सर्व्वज्ञं, वीरं सदेवमनुष्यासुरलोके श्रमणो भगवान्महावीर इत्यागमप्रसिद्धनामानमनेनेष्टदेवतास्तवद्वारेण मंगलमाह । सद्धर्म्मपरीक्षकस्त्रिविधो वक्ष्यमाणस्तदादयो ये भावास्तेषां किंचिदित्यस्य स्वल्पमात्राभिधायित्वाल्लेशं वक्ष्ये लिंगादिभेदतः खल्विति लिंगवृत्तादिविशेषप्रतिपादनद्वारेण यद्यप्यपरैरेव पूर्वाचार्यैः सद्धर्म्मपरीक्षादयो भावाः स्फुटमेवाभिहितास्तथाप्यहं समासेनैवाभिधास्यामीति संक्षेपाभिधानं प्रयोजनं । स्वरूपतस्तुशिष्यबुद्धौ सद्धर्म्मपरीक्षकादिभावानामारोपणं, तच्च वचनरूपापन्नं प्रकरणमंतरेण न संभवतीति-

पूजाव्यर्थत्त्वपरिहाराय कारिकाद्वयमाह ॥

कूपोदाहरणादिह कायवधोऽपि गुणवान् मतो गृहिणः। मन्त्रादेरिव च ततस्तदनुपकारेऽपि फलभावः॥१४॥
कृतकृत्यत्त्वादेव च तत्पूजा फलवती गुणोत्कर्षात्। तस्मादव्यर्थैषाऽरम्भवतोऽन्यत्र विमलधियः॥ १५ ॥

य० कूपोदाहरणात्समयप्रसिद्धादिह पूजाप्रस्तावे। कायवधोऽपि जलवनस्पत्याद्युपरोधोऽपि गुणवान् सगुणो मतोऽभिप्रेतो गृहिणो गृहस्थस्य एतावता वचनेन कायवधदोषः परिहृतः। मन्त्रादेरिव च मन्त्राग्निविद्यादेरिव च ततस्तस्याः पूजायाः सकाशात्सुरस्य तदनुपकारेऽपि स्मर्यमाणमन्त्रसेव्यमानज्वलनाऽभ्यस्यमानविद्यादेरनुपकारेऽपि स्मर्य्यमाणमन्त्रादीना स्वगतोपकाराभावात् फलभावः फलसद्भावो यथा विषशीतापहारविद्यासिद्ध्यादिरूपो मन्त्रादेस्तथा जिनपूजनतो जिनानामनुपकारेऽपि पूजकस्य विशिष्टपुण्यलाभरूपः फलभावोऽनेनापि न चोपकारो जिनस्येति दोषः परिहृतः॥ १४ ॥ कृतकृत्यत्त्वादेव च सर्व्वसिद्धार्थत्त्वादेव च। तत्पूजा देवपूजा फलवती सफला गुणोत्कर्षात् कृतकृत्यस्योत्कृष्टगुणत्त्वादनेन पूजाया अभावे यत्कृतकृत्यत्त्वं हेतुत्त्वेनोपन्यस्तं तत्परिहृतमवगन्तव्यम्, तस्मादिति निगमनमव्यर्थैषा सप्रयोजना पूजा आरम्भवतोऽन्यत्र विमलधियः विमलबुद्धेः पुरुषस्यान्यत्र शरीरस्वजननिकेतनादावारम्भवत आरम्भप्रवृत्तस्य॥ १५ ॥

उ० एतद्दोषपरिहाराय कारिकाद्वयमाह। कूपेत्यादि। कूपोदाहरणात्समयप्रसिद्धादिह पूजाप्रस्तावे कायवधोऽपि जलवनस्पत्याद्युपघातोऽपि गुणवान् सगुणो मतोऽभिप्रेतो गृहिणो गृहस्थस्याल्पव्ययेन बह्वायभावात्। अनेन कायवधदोषः

प्रकरणमुपायः ८पेयं तु तदर्थपरिज्ञानमुपायोपेयलक्षणश्च संबंधस्तर्कानुसारिणः प्रति । उक्तंच । शास्त्रं प्रयोजनं चेति संबंधस्याश्रयावुभौ । तदुक्त्यांतर्गतस्तस्माद्भिन्नो नोक्तः प्रयोजनात् ॥ १ ॥

समयानुसारिणस्त्वंगीकृत्य गुरुपर्व्वक्रमलक्षणः । अभिधेयं तु सद्धर्म्मपरीक्षकादयो भावाः प्रकरणप्रतिपाद्याः । किमर्थं चेदं प्रयोजनादित्रयं प्रतिपाद्यते, शिष्यश्रवणप्रवृत्त्यर्थं । यथोक्तं प्रेक्षावतां प्रवृत्त्यर्थं फलादित्रितयं स्फुटं । मंगलं चैव शास्त्रादौ वाच्यमिष्टार्थसिद्धये इति ॥ १ ॥

## ॥ श्रीमदुपाध्यायकृतटीकायुक्तश्रीषोडशकम् ॥

ॐ ऐंद्रश्रेणिनतं वीरं नत्वास्माभिर्विधीयते । व्याख्या षोडशकग्रंथे संक्षिप्तार्थावगाहिनी ॥ १ ॥ तत्रादाविदमार्यासूत्रं प्रणिपत्येत्यादि । प्रणिपत्य नमस्कृत्य जिनं जितरागादिदोषं वीरं वर्द्धमानस्वामिनं सद्धर्मपरीक्षको बालादिभेदेन त्रिविधस्तदादयो ये भावास्तेषां लिंगादिभेदतः लिंगादिभेदमाश्रित्य किंचिदल्पं स्वरूपमितिशेषः । समासेन मितशब्देन वक्ष्येऽभिधास्यामि ॥ १ ॥

सद्धर्म्मपरीक्षकस्य त्रिविधस्य व्यापारमुपदर्शयति ।

**बालः पश्यति लिंगं मध्यमबुद्धिर्विचारयति वृत्तम् ॥ आगमतत्त्वं तु बुधः परीक्षते सर्वयत्नेन ॥ २ ॥**

य० बालो विशिष्टविवेकविकलो लिंगं वेषमाकारं बाह्यं पश्यति प्रधानेन। धर्म्मार्थिनोऽपि तस्य तत्रैव भूयसा रुचिप्रवृत्तेः।

वेषु हिता हितहेतुर्वृत्तिः प्रवृत्तिर्नतु कस्यचिदहिता समरसापत्त्या सर्वतन्त्रसमूहरूपस्वसमयव्युत्पत्तिकृतसर्वानुग्रहपरिणत्या गाम्भीर्याद् गम्भीराशयात्। दृष्टान्तश्चायं—काचित् स्त्री स्वपतिवशीकाराय काञ्चित्परिव्राजिकां तदुपायमपृच्छत्तया च किल कुतश्चित्सामर्थ्यात्स वृषभः कृतः तं चारयन्ती पाययन्ती चास्तेऽन्यदा च वटवृक्षस्याधस्तान्निपण्णे तस्मिन् पुरुषगवे विद्याधरीयुग्मं विहायसस्तत्राजगाम तत्रैकयोक्तमयं स्वाभाविको न गौर्द्वितीययोक्तं कथं तर्हि स्वाभाविकः स्यादाद्ययोक्तमस्य वटस्याधस्तात्सञ्जीवनीनामौषधिरस्ति यदि तामयं चरेत्तदा सहजपुंरूपतामासादयेदिति तच्च विद्याधरीवचनं तया स्त्रिया श्रोत्रपत्राभ्यां पपे तां चौषधिं विशेषतोऽजानानया सर्वामेव तत्प्रदेशस्थां चारिं चारितः सामान्यतः पतिगवः यावदसौ सञ्जीवनीमुपभुक्तवांस्तावदेव पुरुषः संवृत्तः। यथा तस्याः स्त्रियास्तस्मिन् पुंगवे हिता प्रवृत्तिरेवं भावनाज्ञानान्वितस्यापि सर्वभव्यसार्थेऽनुग्रहप्रवृत्तस्य हितैव प्रवृत्तिरिति ॥ ११ ॥

विपर्ययो मोहतोऽन्य इत्युक्तं स पुनः क इत्याह ॥

**गुर्वादिविनयरहितस्य यस्तु मिथ्यात्वदोषतो वचनात्। दीप इव मण्डलगतो बोधः स विपर्य्ययः पापः १२**

य० गुर्व्वादिविनयरहितस्य गुरूपाध्यायादिविनयविकलस्य यस्तु यः पुनर्मिथ्यात्त्वदोषतो मिथ्यात्त्वदोषात्तत्त्वार्थाश्रद्धानरूपाद्वचनादागमाद्दीप इव। मण्डलगतो मण्डलाकारो बोधोऽवगमस्तैमिरिकस्येव। स तथाविधो बोधो वचनाद्भवज्ञप्यध्यारोपदोषतो विपर्य्ययो मिथ्याप्रत्ययरूपः पदमात्रवाच्यार्थविपयः पापः स्वरूपेण वर्त्तते ॥ १२ ॥

उ० उक्तं ज्ञानत्रयस्वरूपमथैतद्विपर्य्ययस्वरूपमाह। गुर्वादीत्यादि। गुर्वादीनामुपाध्यायादीनां विनयरहितस्य यस्तु

मध्यमवुद्धिर्म्मध्यमविवेकसंपन्नो, विचारयति मीमांसते, वृत्तं वक्ष्यमाणस्वरूपं, प्राधान्येन समाश्रयति तत्रैवाभिलाषात्। आगमतत्त्वंत्वागमपरमार्थमैदंपर्यरूपं, वुधो विशिष्टविवेकसंपन्नः, परीक्षते समीचीनमवलोकयति। सर्व्वयत्नेन सर्व्वादरेण धर्म्माधर्मव्यवस्थाया आगमनिवंधनत्वात्। यत उक्तं। धर्म्माधर्म्मव्यवस्थायाः शास्त्रमेव नियामकं। तदुक्तासेवनाद्धर्म्म-स्त्वधर्म्मस्तद्विपर्ययात्॥ २॥

उ० सद्धर्मपरीक्षकस्य वालादिभेदत्रयव्यापारद्वारा ( स्वरूपं ) निरूपयन्नाह। वाल इत्यादि। वालो विवेकविकलो धर्मे-च्छुरपि लिंगं वाह्यं वेषं पश्यति प्राधान्येन। मध्यमवुद्धिर्मध्यमविवेकसंपन्नो वृत्तमाचारं विचारयति, यद्ययमाचारवान् स्यात्तदा वंद्यः स्यादिति वितर्कारूढं करोति। वुधो विशिष्टविवेकसंपन्नस्तु सर्वयत्नेन सर्वादरेणागमतत्त्वं सिद्धांतपरमार्थं परीक्षते पुरस्कृत्याद्रियते। वालादीनां वाह्यदृष्ट्यादौ च स्वरुचिंभेद एव हेतुः॥ २॥

इदानीं पूर्व्वोक्तानां वालादीनामेव लक्षणमाह॥

**वालो ह्यसदारंभो मध्यमवुद्धिस्तु मध्यमाचारः॥ ज्ञेय इह तत्त्वमार्गे वुधस्तु मार्गानुसारी यः॥ ३॥**

अ० वालो हि पूर्व्वोक्तः॥ असन्नसुंदर आरंभोऽस्येत्यसदारंभोऽविद्यमानं वा यदागमे व्यवच्छिन्नं तदारभत इत्यसदारंभः न सदा न सर्वदा। स्वशक्तिकालाद्यपेक्ष आरंभोऽस्येति वा। मध्यमवुद्धिस्तु पूर्व्वोक्तो मध्यमाचार आगमैदंपर्यविकल-त्वात् प्रावचनिककार्याऽप्रवृत्तेः। ज्ञेय इह प्रक्रमे, तत्त्वमार्गे परमार्थमार्गे प्रवचनोन्नतिनिमित्ते वुधस्तूक्तलक्षण एव मार्गा-नुसारी ज्ञानादित्रयानुसारी। स्वपरयोस्तद्वृद्धिहेतुत्वेन यः स विज्ञेय इति॥ ३॥

विकारेण मनोविभ्रमदोषेण समन्वितः पुरुष एवं ग्रहगृहीतरीत्यात्मानमकृतार्थं सन्तं कृतार्थं पश्यति किम्भूतं तस्य कृतार्थस्य व्यत्ययेन यानि लिङ्गानि तेषु रतो यः स तथा तम्। अनेन वस्तुवृत्त्याकृतार्थत्वमेवाह विपर्य्ययदर्शने को हेतुरत्राह। इत्यमुना गुर्वनधीनतादिलक्षणेन प्रकारेण तस्य मोहविकारस्य ग्रहः कर्मशक्तिरूपेणात्मन्युपादानं तत एव कृतार्थमिति पश्यतीतियोजनायां चेत्युक्तत्वेन प्रथमापत्तिः समाधेया ॥ १४ ॥

ज्ञानविपर्ययोः स्वाम्युपदर्शनार्थमिदं कारिकाद्वयमाह ॥

**सम्यग्दर्शनयोगाज् ज्ञानं तद्ग्रन्थिभेदतः परमम्। सोऽपूर्वकरणतः स्याज्ज्ञेयं लोकोत्तरं तच्च ॥ १५ ॥**

**लोकोत्तरस्य तस्मान्महानुभावस्य शान्तचित्तस्य। औचित्यवतो ज्ञानं शेषस्य विपर्य्ययो ज्ञेयः ॥१६॥११**

य० सम्यग्दर्शनयोगात्तत्त्वार्थश्रद्धानसम्बन्धाज्ज्ञानं सम्यग्ज्ञानं, तत्सम्यग्दर्शनं ग्रन्थिभेदतो ग्रन्थिभेदात्, परमं प्रधानं स्वरूपतो वर्त्तते स ग्रन्थिभेदो नियमत एवापार्द्धपुद्गलपरावर्त्ताधिकसंसारच्छेदी अपूर्वकरणतः स्यादपूर्व्वपरिणामाद्भवेत्। ज्ञेयं लोकोत्तरं तच्च, तच्चापूर्व्वकरणं लोकात्सर्व्वस्मादप्युत्तरं प्रधानं ज्ञेयम्। अपूर्व्वकरणमपूर्व्वपरिणामः शुभोऽनादावपि संसारे तेषु तेषु धर्म्मस्थानेषु सूत्रार्थग्रहणादिषु वर्त्तमानस्याप्यसञ्जातपूर्व्व इति कृत्वा ॥ १५ ॥ लोकादुत्तरः प्रधानो ज्ञानवानिह गृह्यते तस्य लोकोत्तरस्य तस्मादिति निगमने महानुभावस्याचिन्त्यशक्तेः शान्तचित्तस्योपशान्तमनसः। औचित्यवत औचित्ययुक्तस्य ज्ञानमनेन ज्ञानस्वामी निदर्शितः। शेषस्योक्तगुणविपरीतस्य विपर्य्ययो ज्ञेयो ज्ञानत्रयादन्यः पदमात्रवाच्यार्थविषयः पूर्वोक्त इति ॥ १६ ॥ ११ ॥

उ० आचारद्वारैः तन्निरूपणमाह । बालो हीत्यादि । बालो हि निश्चितं असदारंभो निषिद्धकार्यकारी । मध्यमबुद्धिस्तु गुरुलाघवज्ञानसाध्यकार्यानाचरणसूत्रदृष्टमात्रकार्याचरणाभ्यां मध्यमाचारः । ज्ञेय इह प्रक्रमे तत्त्वमार्गे मोक्षाध्वनि बुधस्तु स एव यो मार्गानुसारी ज्ञानादित्रयानुसारी ॥ ३ ॥

कथं पुनर्बाह्यलिंगप्राधान्यदर्शिनो बालत्वमित्याह ।

**बाह्यं लिंगमसारं तत्प्रतिबद्धा न धर्मनिष्पत्तिः ॥ धारयति कार्यवशतो यस्माच्च विडंबकोऽप्येतत् ॥ ४॥**

य० बाह्यं बहिर्व्वर्त्ति दृश्यं, लिंगमाकारो वेषस्तदसारं। यतस्तत्प्रतिबद्धा तदविनाभाविनी। न धर्म्मनिष्पत्तिर्न्न धर्म्मसंसिद्धिर्विदुषां मता । धारयति कार्यवशतः कार्यागीकरणेन स्वाभिप्रेतफलसिद्धये । यस्माच्च विडम्बकोऽप्येतद्धर्म्मनिष्पत्त्यभावविवक्षया यस्माच्चेति हेत्वंतरसूचनं । एको हेतुर्बाह्यलिंगाद्धर्म्मनिष्पत्तेरभावो, द्वितीयस्तु कुतश्चिन्निमित्ताद्विडंबकस्यापि तद्धारणमाभ्यां बाह्यलिंगमसारं । स तु बालस्तदेव प्राधान्येन मन्यत इति ॥ ४ ॥

उ० बाह्यलिंगप्राधान्यदर्शिनो बालत्वे हेतुमाह। बाह्यमित्यादि। बाह्यं बहिर्दृश्यं लिंगं वेषादिचिह्नमसारमफलं यतस्तत्प्रतिबद्धा तदविनाभाविनी धर्मनिष्पत्तिर्नास्ति। यस्माच्च कार्यवशतः स्वप्रयोजनाभिलाषाद्विडंबकोप्येतल्लिंगं धारयति ततो न तद्धारयितुः प्रणंतु(प्रणेतु)र्वा फलमित्युभयथाप्यसारमित्यर्थः ॥ ४ ॥

ननु च बाह्यलिंगस्य कथमप्राधान्यं भवद्भिरुच्यते । यतस्तत्परिग्रहत्यागरूपमित्याशंक्याह ॥

**बाह्यग्रंथत्यागान्न चारु नत्वत्र तदितरस्यापि ॥ कंचुकमात्रत्यागान्न हि भुजगो निर्विषो भवति ॥ ५ ॥**

क्तया सेवनं करणमत्र प्रक्रमे भवति जायते। विधिपूर्वं विधिमूलं धर्म्मकथान्तं धर्म्मकथावसानं क्रमशः क्रमेण तदासेवनं स्वाध्यायोऽपि पूर्व्वोक्तनिर्व्वचनो विनिर्दिष्टः कथित इति ॥ ३ ॥

उ० स्वाध्यायमाह यत्त्वित्यादि। यत्तु यत्पुनः खलुशब्दो वाक्यालङ्कारे वाचनादेर्वाचनाप्रश्नपरावर्त्तनादेरासेवनमभिव्याप्त्या मर्यादया वा प्रवचनोक्तया सेवनं करणमत्र प्रक्रमे भवति जायते विधिपूर्वं विधिमूलं धर्मकथान्तं धर्मकथाऽवसानं क्रमशः क्रमेण तदासेवनं स्वाध्यायो विनिर्दिष्टः कथितः सुष्ठु शोभनं आ अभिव्याप्त्याऽध्ययनं स्वाध्यायः स्वं स्वकीयमध्ययनं वा स्वाध्याय इति व्युत्पत्तेः ॥ ३ ॥

योगाभ्यासमाह ॥

**स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं सम्यक्। परतत्त्वयोजनमलं योगाभ्यास इति तत्त्वविदः ॥४॥**

य० स्थीयतेऽनेनेति स्थानमासनविशेषरूपं कायोत्सर्गपर्यङ्कबन्धपद्मासनादि सकलशास्त्रसिद्धम्। ऊर्णः शब्दः स च वर्णात्मकः। अर्थः शब्दस्याभिधेयमालम्बनं बाह्यो विषयः प्रतिमादिस्तस्मादालम्बनादन्यस्तद्विरहितस्वरूपोऽनालम्बन इतियावत्। स्थानं चोर्णश्चार्थश्चालम्बनं च तदन्यश्चैत एव योगास्तेषां परिभावनं सर्व्वतोऽभ्यसनं सम्यक्समीचीनं परं तत्त्वं योजयतीति परतत्त्वयोजनं, मोक्षेण योजनादलमत्यर्थं योगस्य योगाङ्गरूपस्य ध्यानस्य वाभ्यासः परिचयो योगाभ्यासः इतीत्थं तत्त्वविदोऽभिवदन्ति (विन्दति)। कथं पुनः स्थानादीनां योगरूपत्वं येन तत्परिभावनं योगाभ्यासो भवेत्। उच्यते। योगाङ्गत्वेन, योगाङ्गस्य च शास्त्रेषु योगरूपताप्रसिद्धेर्हेतुफलभावेनोपचारात्। योगाङ्गत्वं तु स्थानादीनां प्रतिपादितमेव योग-

य० वाह्यग्रंथत्यागाद्धनधान्यस्वजनवस्त्रादित्यागान्न चारु न शोभनं वाह्यलिंगं ननु निश्चितमेतदत्र लोके। तद्वाह्यलिंगमितरस्यापि मनुष्यतिर्यक्प्रभृतेः संभवति। एनमेवार्थं प्रतिवस्तूपमया दर्शयति। कंचुकमात्रत्यागादुपरिवर्त्तित्वङ्मात्रपरित्यागान्नहि नच भुजगः सरीसृपः कथंचिन्निर्विषो भवति ॥ ५ ॥

उ० त्यागलक्षणत्वादिदं शोभनं भविष्यतीत्याशंक्याह वाह्येत्यादि। वाह्यग्रंथस्य धनधान्यादेस्त्यागान्न चारु शोभनं वाह्यलिंगं गुणशून्यं ननु निश्चितमत्र लोके। तद्वाह्यग्रंथाभावलक्षणमितरस्य तिर्यगादेरपि संभवति। एतदेव प्रतिवस्तूपमया द्रढयति। कंचुकमात्रस्योपरिवार्त्तित्वङ्मात्रस्य त्यागान्नहि नैव भुजगः सर्पो निर्विषो भवति ॥ ५ ॥

प्रस्तुतमेवार्थ तंत्रांतरसंवादेनाह ॥

मिथ्याचारफलमिदं ह्यपैररपि गीतमशुभभावस्य ॥ सूत्रेऽप्यविकलमेतत्प्रोक्तममेध्योत्करस्यापि ॥ ६ ॥

य० मिथ्या अलीको विशिष्टभावशून्य आचारो मिथ्याचारस्तस्य फलं कार्यमिदं वाह्यलिंगं केवलमेव हिर्यस्मादपरैरपि तंत्रांतरीयैर्गीतं कथितमशुभभावस्यान्तरशुभभावरहितस्य पुंसोमिथ्याचारस्वरूपं चेदं। "वाह्येंद्रियाणि संयम्य य आस्ते मनसा स्मरन्। इंद्रियार्थं विमूढात्मा मिथ्याचारः स उच्यते ॥ १ ॥" जन्मांतरोपार्जिताकुशलकर्मविपाक एवैष यद्भोगोपभोगादिरहितेन प्रेक्षावत्पुरुषपरिनिंदनीयं क्लिष्टं जीविकाप्रायं तथाविधवाह्यलिंगधारणमिति। तंत्रांतरप्रसिद्धमिममर्थमंगीकृत्यापरैरपीत्युक्तं। न केवलं तंत्रांतरेषु। सूत्रेऽप्यागमेऽपि स्वकीयेऽविकलं परिपूर्णमेतद्वाह्यलिंगं स्वकीयमेव प्रोक्तं

आमूलमिदं योगमार्गस्येत्युक्तं तत्र कतिविधो योग इत्याह ॥

**सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । जिनरूपध्यानं खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥ १ ॥**

य० सह आलम्बनेन चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्त्तत इति सालम्बनो निरालम्बनश्चालम्बनाद्विषयभावापत्तिरूपान्निष्क्रान्तो निरालम्बनो यो हि छद्मस्थेन ध्यायते न च स्वरूपेण दृश्यते तद्विषयो निरालम्बन इति यावत् । योगो ध्यानविशेषः परः प्रधानो द्विधा ज्ञेयो द्विविधो वेदितव्यः । जिनरूपस्य समवसरणस्थितस्य ध्यानं चिन्तनं खलुशब्दो वाक्यालङ्कारे आद्यः प्रथमः सालम्बनो योगः । तस्यैव जिनस्य तत्त्वं केवलजीवप्रदेशसङ्घातरूपं केवलज्ञानादिस्वभावं तस्मिन् गच्छतीति तत्तत्त्वगः तुरेवकारार्थः परोऽनालम्बनः मुक्तपरमात्मस्वरूपध्यानमित्यर्थः ॥ १ ॥

उ० आमूलमिदं योगमार्गस्येत्युक्तं । तत्र कतिविधो योग इत्याह । सालम्बन इत्यादि । सहालम्बनेन चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्त्तत इति सालम्बनो निरालम्बनश्चालम्बनाद्विषयभावापत्तिरूपान्निष्क्रान्तो यो हि च्छद्मस्थेन ध्यायते नच स्वरूपेण दृश्यते योगो ध्यानविशेषः परः प्रधानो द्विधा ज्ञेयः जिनरूपस्य समवसरणस्थस्य ध्यानं चिन्तनं खलुशब्दो वाक्यालङ्कारे आद्यः प्रथमो योगः सालम्बनः तस्यैव जिनस्य तत्त्वं केवलजीवप्रदेशसंघातरूपं केवलज्ञानादिस्वभावं तस्मिन् गच्छतीति तत्तत्त्वगः तुरेवकारार्थेऽपरो द्वितीयः शुद्धपरमात्मगुणध्यानं निरालम्बनमित्यर्थः ॥ १ ॥

कथं पुनः जिनरूपं ध्यातव्यमित्याह ॥

**अष्टपृथग्जनचित्तत्यागाद्योगिकुलचित्तयोगेन । जिनरूपं ध्यातव्यं योगविधावन्यथा दोषः ॥ २ ॥**

उ० तत्र जिनेन्द्ररूपमीदृशं ध्येयमित्याह । सिंहासनेत्यादि । सिंहासने देवनिर्मितसिंहोपलक्षितासने छत्रत्रयसहितकल्पपादपस्याधोऽधस्तान्निषण्णं सत्त्वानां प्राणिनामर्थ उपकारस्तस्मिन् सम्यक्प्रवृत्तं देशनया धर्मकथया कान्तं कमनीयमत्यन्तमतिशयेन ॥ २ ॥

पुनरपि कीदृक्तद्रूपमित्याह ॥

आधीनां परमौषधमव्याहतमखिलसम्पदां बीजम्। चक्रादिलक्षणयुतं सर्वोत्तमपुण्यनिर्म्माणम् ॥ ३ ॥

ग्र० आधीनां शारीरमानसानां पीडाविशेषाणां परमौषधं प्रधानौषधकल्पं तदपनेतृत्त्वेनाऽव्याहतमनुपहतमखिलसम्पदां सर्व्वसम्पत्तीनां वीजं कारणं चक्रादीनि यानि लक्षणानि चक्रस्वस्तिककमलकुलिशादीनि तैर्युतं समन्वितं सर्व्वोत्तमं च तत्पुण्यं च निर्म्मीयते अनेनेति निर्म्माणं सर्व्वोत्तमं पुण्यनिर्म्माणं यस्येति सर्व्वोत्तमपुण्यनिर्म्मितमित्यर्थः ॥ ३ ॥

उ० आधीनामित्यादि । आधीनां मानसीनां पीडानां परमौषधं तदपनेतृत्त्वेनाव्याहतमनुपहतमखिलसम्पदां सर्वसम्पत्तीनां वीजं कारणं चक्रादीनि यानि लक्षणानि चक्रस्वस्तिककमलकुलिशादीनि तैर्युतं सहितं निर्म्मीयतेऽनेनेति निर्म्माणं सर्वोत्तमं पुण्यनिर्म्माणं यस्य तत् सर्वातिशयितादृष्टाकृष्टपरमाणुनिर्मितमित्यर्थः ॥ ३ ॥

तदेव विशिनष्टि ॥

निर्वाणसाधनं भुवि भव्यानामग्र्यमतुलमाहात्म्यम् । सुरसिद्धयोगिवन्द्यं वरेण्यशब्दाभिधेयं च ॥४॥

ग्र० निर्व्वाणसाधनं परमपदप्रापकं सुखसाधनं वा भुवि पृथिव्यां, भव्यानां योग्यानामग्र्यं प्रधानमतुलमाहात्म्यमसा-

निवृत्तिमदहिंसाद्यात्मकं सदनुष्ठानं प्रोक्तं कार्ये सदनुष्ठानरूपे हेतोरांतरचारित्रपरिणामरूपस्योपचारेणाध्यारोपेण ॥ ७ ॥

एतच्च सदनुष्ठानं शुद्धाशुद्धभेदं तद्द्वयमप्याह ॥

**परिशुद्धमिदं नियमादांतरपरिणामतः सुपरिशुद्धात् ॥ अन्यदतो न्यस्मादपि बुधविज्ञेयं त्वचारुतया ॥८॥**

य० परिशुद्धं सर्व्वप्रकारशुद्धमिदं सदनुष्ठानं नियमान्नियमेनान्तरपरिणामतस्तथाविधचारित्रमोहनीयकर्म्मक्षयोपशमादिजन्यात्सुपरिशुद्धाच्छास्त्रानुसारेण सम्यक्त्वज्ञानमूलादितिभावः । अन्यदित्यपरिशुद्धमतोन्यस्मादांतरपरिणामाद्योऽन्यः कश्चिद्धेतुर्लाभपूजाख्यात्यादिस्ततोऽन्यस्मादपि प्रवर्त्तते । ननु परिशुद्धापरिशुद्धयोः सदनुष्ठानयोः स्वरूपं तुल्यमेवोपलभामहे, तत्कथं प्रतिनियतस्वरूपतया ज्ञायत इत्याह बुधविज्ञेयं त्वचारुतया बुधैस्तत्त्वविद्भिरेवाचारुतया असुंदरत्वेनेतररूपविविक्तं तद्विज्ञायते यथा अचार्विति । न पुनरितरैस्तेषां तद्गतविशेषानुपलंभादिति ॥ ८ ॥

उ० एतच्च सदनुष्ठानं शुद्धाशुद्धतया द्विभेदमित्याह । परिशुद्धमित्यादि । परिशुद्धं सर्वथा शुद्धमिदं सदनुष्ठानं नियमादांतरपरिणामतश्चारित्रमोहक्षयोपशमजन्या(निता)त्सुष्ठु सम्यक्त्वज्ञानमूलत्वेन परिशुद्धात् अन्यदित्यपरिशुद्धमतोऽस्मादांतरपरिणामात् योऽन्यः कश्चिद्धेतुर्लाभपूजाख्यात्यादिस्तदपि एतदपीतरतुल्यत्वेनैव प्रतीयते । तत्राह । बुधविज्ञेयं तु तत्त्वविद्भिरेव विज्ञेयमचारुतयासुंदरत्वेन । त एव हि क्षीरनीरविवेचका नान्ये इति ॥ ८ ॥

कः पुनर्विशेषो यदुपलंभात्सदनुष्ठानासदनुष्ठानयोरिदमवधार्यते परिशुद्धमेतदिति तदुपदर्शनार्थमाह ॥

**गुरुदोषारंभितया तेष्वकरणयत्नतो निपुणधीभिः ॥ सन्निंदादेश्च तथा ज्ञायत एतन्नियोगेन ॥ ९ ॥**

तत्त्वसंदृष्टिस्तत्त्वदर्शनं यस्य स प्रातिभसञ्जाततत्त्वसंदृष्टिः परिगत एतस्मिन् भवतीत्यवसेयम्, इदमिति प्रत्यक्षीकृतं सालम्बनध्यानद्वारेण जिनेन्द्ररूपमपरमर्वाग्भागवर्त्ति परस्मादन्यत्तत्त्वं परमार्थरूपं ध्येयं तद्वर्त्तते। यद्वशतस्तु यद्वशादेव यत्सामर्थ्यादपरतत्त्वसामर्थ्यादित्यर्थः। अस्ति भवत्यतोऽप्यऽपरतत्त्वादन्यत्परतत्त्वं मुक्तिस्थं, इदमुक्तंभवति सर्व्वस्यापि ध्यानपरस्य योगिनोऽपरतत्त्ववशात्परं तत्त्वमाविर्भवतीति ॥ ६ ॥

उ० तथा। चरमेत्यादि। चरमावञ्चकयोगात्फलावञ्चकयोगात्प्रागुक्तात् प्रतिभैव प्रातिभमदृष्टार्थविषयो मतिज्ञानविशेषस्तेन सञ्जाता तत्त्वदृष्टिर्यस्य स तथा भवतीति सर्वविशेषणसङ्गता क्रियाध्याहार्या इदमनुपदोक्तफलं सालम्बनध्यानद्वारा प्रत्यक्षीकृतं जिनेन्द्ररूपमपरं परस्मादन्यदर्वाग्भागवर्त्ति तत्त्वं परमार्थरूपं ध्येयं तद्वर्त्तते यद्वशतस्तु यदपरतत्त्वसामर्थ्यादतोप्यस्ति जायतेऽतोऽप्यपरत्त्वादप्यन्यत्परतत्त्वं मुक्तिस्थम्। इदमुक्तं भवति। सर्वस्यापि ध्यानपरस्य योगिनोऽपरतत्त्ववशात्परतत्त्वमाविर्भवति ॥ ६ ॥

कस्मात्पुनः परं तत्त्वमेवं संस्तूयत इत्याह ॥

**तस्मिन् दृष्टे दृष्टं तद्भूतं तत्परं मतं ब्रह्म। तद्योगादस्यापि ह्येषा त्रैलोक्यसुन्दरता ॥ ७ ॥**

य० तस्मिन्परतत्त्वे सिद्धस्वरूपे दृष्टे समुपलब्धे दृष्टं सर्व्वमेव वस्तु भवति जीवाद्यमूर्त्तवस्त्वालम्बनस्य बोधस्य सर्व्वविषयत्त्वात्। तद्भूतं तदेव सिद्धस्वरूपं भूतं सत्यं संसारिजीवस्वरूपस्य ज्ञानावरणादिकर्म्मावृतस्य सद्भूततत्त्ववियोगात्। कर्ममलमलिनस्य ह्यात्मनो न भूतं रूपमुपलक्ष्यते। तद्विकारैरुपद्रूयमाणत्त्वात्सिद्धस्वरूपस्य तु निरुपद्रवत्त्वाद्भूतमेव

य० गुरून् दोषान् प्रवचनोपघातकारिण आरब्धुं शीलमस्येति गुरुदोषारंभी तद्भावस्तया। लघुषु सूक्ष्मेषु दोषेष्वकरणयत्नः परिहारादरस्तस्माच्च। निपुणधीभिः कुशलबुद्धिभिः। तथा सतां सत्पुरुषाणां साधुश्रावकप्रभृतीनां निंदादि निंदा गर्हा प्रद्वेषादिः तस्माच्च ज्ञायत एतदपरिशुद्धानुष्ठानं। नियोगेनावश्य तया। यो हि गुरुदोषादिषु प्रवर्त्तते तस्यांतःकरणशुद्धेरभावादसदनुष्ठानमेतदिति निश्चीयते ॥ ९ ॥

उ० यथा बुधैरिदमशुद्धं ज्ञायते तथाह। गुर्वित्यादि। गुरून् दोषान् प्रवचनोपघातादीनारब्धुंशीलं यस्य स तथा तत्तया ग्रो लघुषु सूक्ष्मेषु दोषेष्वकरणयत्नः परिहारादरस्तस्मान्निपुणधीभिः कुशलबुद्धिभिस्तथा सतां सत्पुरुषाणां साधुश्राद्धादीनां निंदादेर्गर्हाप्रद्वेषादेश्च ज्ञायते यदेतदपरिशुद्धानुष्ठानं नियोगेनावश्यंतया गुरुदोषारंभादेरपरिशुद्धिकार्यत्वात् ॥ ९ ॥

आगमतत्त्वं तु बुधः परीक्षत इत्युक्तं किं पुनस्तदित्याह ॥

**आगमतत्त्वं ज्ञेयं तद्दृष्टेष्टाविरुद्धवाक्यतया ॥ उत्सर्गादिसमन्वितमलमैदंपर्यशुद्धं च ॥ १० ॥**

य० आगमतत्त्वं ज्ञेयं भवति। तत्कथं ज्ञेयं। दृष्टं प्रत्यक्षानुमानप्रमाणोपलब्धमिष्टमागमेन स्ववचनैरेवाभ्युपगतं ताभ्यामविरुद्धानि वाक्यानि यस्मिन्नागमतत्त्वे तत् दृष्टेष्टाविरुद्धवाक्यं तद्भावस्तया योऽर्थः प्रत्यक्षानुमानाभ्यां परिच्छिद्यते तस्मिन्यथागमतत्त्वमप्यविरोधि भवति तद्विरुद्धस्य ताभ्यामेव निराकरणात् प्रत्यक्षानुमानविरुद्धस्याप्रमाणत्वात् स्ववचनैरेवागमेनाभ्युपगतेऽर्थे प्रदेशांतरवर्त्तिनास्यैवागमस्य वचनं यदि विरोधि न भवेदित्यर्थतस्तत् आगमतत्त्वमिष्टाविरोधिवाक्यं भवति परस्पराविरोधिवचनमित्यर्थः। तदेव विशिनष्टि उत्सर्गादिसमन्वितमुत्सर्गःसामान्यं यथा न हिंस्याद्भूतानि।

नेच्छा अनालम्बनयोगः प्रोक्तस्तद्वेदिभिस्तस्य परतत्त्वस्य दर्शनमुपलम्भस्तद्यावत् परमात्मस्वरूपदर्शने तु केवलज्ञानेन अनालम्बनयोगो न भवति । तस्य तदालम्बनत्वात्, ॥ ८ ॥

उ० कः पुनरनालम्बनयोगः कियन्तं च कालं भवतीत्याह । सामर्थ्येत्यादि । सामर्थ्ययोगतः "शास्त्रसंदर्शितोपायस्तदतिक्रान्तगोचरः । शक्त्युद्रेकाद्विशेषेण सामर्थ्याख्योऽयमुत्तम" इत्येवमुक्तलक्षणात् क्षपकश्रेणीद्वितीयापूर्वकरणभाविनः सकाशात् या तत्र परतत्त्वे दिदृक्षा द्रष्टुमिच्छा इत्येवंस्वरूपाऽसङ्गा निरभिष्वङ्गा शक्तिरनवरतप्रवृत्तिस्तयाढ्या परिपूर्णा सा परमात्मविषयदर्शनेच्छाऽनालम्बनयोगः प्रोक्तः तद्वेदिभिः तस्य परतत्त्वस्यादर्शनमनुपलम्भस्तद् यावत्परमात्मस्वरूपदर्शने तु केवलज्ञानेऽनालम्बनयोगो न भवति दृष्टस्य तस्य तदालम्बनीभावात् ॥ ८ ॥

कथं पुनरनालंबनोऽयमित्याह ॥

तत्राप्रतिष्ठितोऽयं यतः प्रवृत्तश्च तत्त्वतस्तत्र । सर्वोत्तमानुजः खलु तेनानालम्बनो गीतः ॥ ९ ॥

य० तत्र परतत्त्वेऽप्रतिष्ठितोऽलब्धप्रतिष्ठः अयमनालम्बनो यतो यस्मात्प्रवृत्तश्च ध्यानरूपेण तत्त्वतो वस्तुतस्तत्र परतत्त्वे सर्वोत्तमानुजः खलु सर्वोत्तमस्य योगस्यानुजः प्रागनन्तरवर्ती तेन कारणेनाऽनालम्बनो गीतः कथितः ॥ ९ ॥

उ० परतत्त्वदिदृक्षाया अनालम्बनयोगत्वे उपपत्तिमाह । तत्रेत्यादि । तत्र परतत्त्वेऽप्रतिष्ठितोऽलब्धप्रतिष्ठोऽयं परमात्मदिदृक्षाख्यो योगो यतो यस्मात् प्रवृत्तश्च ध्यानरूपेण तत्त्वतो वस्तुतस्तत्र परतत्त्वे तदाभिमुख्याप्रच्यवात् सर्वोत्तमस्य योगनिरोधाख्यनिखिलातिशायियोगस्याऽनुजः प्रागनन्तरवर्ती खलु तेन कारणेनानालम्बनोऽनालम्बनयोगो गीतः कथितः

आदिशब्दादपवादो विशेषो ग्लानादिप्रयोजनगतस्ताभ्यां युक्तं । अलमत्यर्थमैदंपर्यशुद्धं च इदं परं प्रधानमस्मिन्वाक्य इतीदंपरं तद्भाव ऐदंपर्यं वाक्यस्य तात्पर्यं शक्तिरित्यर्थस्तेन शुद्धं यदागमतत्त्वं तदिह ज्ञेयमिति ॥ १० ॥

उ० आगमतत्त्वमाश्रित्याह आगमेत्यादि । आगमतत्त्वं तत् प्रसिद्धं ज्ञेयं भवति दृष्टं प्रत्यक्षानुमाने इष्टं स्वाभ्युपगत आगमस्ताभ्यामविरुद्धमबाधितार्थं वाक्यं यस्य तत्तथा तयोत्सर्गादिनोत्सर्गापवादाभ्यां समन्वितं नतु तदेकांतवाददुष्टं अलमत्यर्थमैदंपर्येण भावार्थेन शुद्धं च नतु श्रुतमात्रेणाविच्छिन्नाकांक्षम् ॥ १० ॥

तदेवागमतत्त्वमुपन्यस्यति ग्रंथकारः ॥

आत्मास्ति स परिणामी बद्धः सत्कर्मणा विचित्रेण ॥ मुक्तश्च तद्वियोगाद्धिंसाहिंसादि तद्धेतुः ॥११॥

य० आत्मा जीवः सोऽस्ति । लोकायतमतनिरासेनैव यत्र प्रतिपाद्यते, तदागमतत्त्वमित्येवंपदांतरेष्वपि संबंधनीयं । स परिणामी । स पूर्व्वप्रस्तुत आत्मा परिणामी परिणामसहितः । पंचस्वपि गतिष्वन्वयी चैतन्यस्वरूपः पुरुषः परिणामलक्षणं चेदं । परिणामो ह्यर्थांतरगमनं । नच सर्वथा व्यवस्थानं । "नच सर्व्वथा विनाशः परिणामस्तद्विदामिष्टः" । सच परिणामी जीवो बद्धः सत्कर्म्मणा विचित्रेण वस्तु सत्कर्म्म न काल्पनिकं वासनादिस्वभावं तेन बद्धो जीवप्रदेशकर्म्मपुद्गलाऽन्योन्यानुगतिपरिणामेन यथोक्तं बंधाधिकारे । "तत् पौद्गलमात्मस्थमचेतनमतींद्रियं । बंधं प्रत्यादि सत्कर्म्म संततिं प्रत्यनादिकं" मुक्तश्च तद्वियोगात्कर्म्मवियोगादात्यंतिककर्म्मपरिक्षयात् । हिंसाहिंसादितद्धेतुरिति हिंसा आदिर्यस्यतद्धिंसादि

बालादिभावमेवं सम्यग्विज्ञाय देहिनां गुरुणा । सद्धर्मदेशनापि हि कर्त्तव्या तदनुसारेण ॥ १३ ॥
यद्भाषितं मुनीन्द्रैः पापं खलु देशना परस्थाने । उन्मार्गनयनमेतद्भवगहने दारुणविपाकम् ॥१४॥
हितमपि वायोरौषधमहितं तच्छ्लेष्मणो यथात्यन्तम् । सद्धर्मदेशनौषधमेवं बालाद्यपेक्षमिति ॥ १५ ॥
एतद्विज्ञायैवं यथार्हं (थोचितं) शुद्धभावसम्पन्नः । विधिवदिह यः प्रयुङ्क्ते करोत्यसौ नियमतो बोधिम् ॥१६॥१॥
बालादीनामेषां यथोचितं तद्विदो विधिर्गीतः । सद्धर्मदेशनायामयमिह सिद्धान्ततत्त्वज्ञैः ॥ १ ॥
बाह्यचरणप्रधाना कर्त्तव्या देशनेह बालस्य । स्वयमपि च तदाचारस्तदग्रतो नियमतः सेव्यः ॥ २ ॥
सम्यग्लोचविधानं ह्यनुपानत्कत्वमथ धरा शय्या । प्रहरद्वयं रजन्याः स्वापः शीतोष्णसहनं च ॥ ३ ॥
षष्ठाष्टमादिरूपं चित्रं बाह्यं तपो महाकष्टम् । अल्पोपकरणसन्धारणं च तच्छुद्धता चैव ॥ ४ ॥
गुर्वी पिण्डविशुद्धिश्चित्रा द्रव्याद्यभिग्रहाश्चैव । विकृतीनां सन्त्यागस्तथैकसिक्थादिपारणकम् ॥ ५ ॥
अनियतविहारकल्पः कायोत्सर्गादिकरणमनिशं च । इत्यादि बाह्यमुच्चैः कथनीयं भवति बालस्य ॥ ६ ॥
मध्यमबुद्धेरत्वीर्यासमितिप्रभृति त्रिकोटिपरिशुद्धम् । आद्यन्तमध्ययोगैर्हितदं खलु साधुसद्वृत्तम् ॥ ७ ॥
अष्टौ साधुभिरनिशं मातर इव मातरः प्रवचनस्य । निगमेन न मोक्तव्याः परमं कल्याणमिच्छद्भिः ॥ ८ ॥
एतत्सचिनस्य सदा साधोर्न्नियमान्न भवभयं भवति । भवति च हितमत्यन्तं फलदं विधिनाऽऽगमग्रहणम् ॥९॥

प्राणातिपातादिपंचकम् अहिंसा आदिर्यस्य तदहिंसादि महाव्रतपंचकं । तयोर्वद्धमुक्तयोरर्थतोवंधमोक्षयोर्व्वा हेतुर्व्वर्त्तते । हिंसाद्यहिंसादिचेति ॥ ११ ॥

उ० तदेवागमतत्त्वमुपन्यस्यति आत्मास्तीत्यादि । आत्मा जीवः सोऽस्त्येतेन चार्वाकमतनिरासः । स परिणामी परिणामसहितो नतु कूटस्थनित्य एतेन सांख्यादिमतनिरासः तथा वद्धः सता वस्तुसता नतु कल्पिताविद्यादिस्वभावेन कर्मणा विचित्रेण नानारूपेणैतेन वेदांत्यादिमतनिरासः । मुक्तश्च तद्वियोगात्कर्मक्षयाद्धिंसाहिंसादि तयोर्वंधमोक्षयोर्हेतुः एवं यत्र प्रतिपाद्यते तदागमतत्त्वमिति योजना ॥ ११ ॥

ऐदंपर्यशुद्धं चेत्युक्तं । का पुनः सा शुद्धिरैदंपर्यस्येत्याह ॥

**परलोकविधौ मानं वचनं तदतींद्रियार्थदृग्व्यक्तं ॥ सर्वमिदमनादि स्यादैदंपर्यस्य शुद्धिरिति ॥ १२ ॥**

य० परलोकविपयो विधिः कर्त्तव्योपदेशस्तस्मिन्मानं प्रमाणं वचनमागमः कीदृशमित्याह । तद्वचनमतींद्रियानर्थान्पश्यतीत्यतींद्रियार्थदृक्सर्व्वज्ञः सर्वदर्शी । तेन व्यक्तमभिव्यक्तार्थं प्रतिपादितार्थमितियावत् । सर्व्वमिदं वचनमनादि स्यात्प्रवाहतः सर्व्वक्षेत्रांगीकरणेनेयमैदंपर्यस्य शुद्धिरित्येवंप्रकाराऽवसेयेति ॥ १२ ॥

उ० आत्मनः परिणामित्वादिकं दृष्टेष्टावाधितमित्यागमतत्त्वस्य दृष्टेष्टाविरुद्धवाक्यत्वमुपदर्शितमुत्सर्गापवादयुक्तत्वं च स्फुटमेव तत्सूत्राणां वहूनामुपलंभादथैदंपर्यशुद्धिमुपदर्शयति । परेत्यादि । परलोकविधावामुष्मिकफलोपदेशे मानं स्वतंत्रप्रमाणं

आसङ्गेऽप्यविधानादसङ्गसक्त्युचितमित्यफलमेतत् । भवतीष्टफलदमुच्चैस्तदप्यसङ्गं यतः परमम् ॥ ११ ॥
एतद्दोषविमुक्तं शान्तोदात्तादिभावसंयुक्तम् । सततं परार्थनियतं सङ्क्लेशविवर्जितं चैव ॥ १२ ॥
सुखप्रदर्शनपरं समुल्लसद्गुणगणौघमत्यन्तम् । कल्पतरुवीजकल्पं शुभोदयं योगिनां चित्तम् ॥ १३ ॥
एवंविधमिह चित्तं भवति प्रायः प्रवृत्तचक्रस्य । ध्यानमपि शस्तमस्य त्वधिकृतमित्याहुराचार्याः ॥ १४ ॥
शुद्धे विविक्तदेशे सम्यक्संयमितकाययोगस्य । कायोत्सर्गेण दृढं यद्वा पर्यङ्कबन्धेन ॥ १५ ॥
साध्वागमानुसाराच्चेतो विन्यस्य भगवति विशुद्धम् । स्पर्शवेधात्तत्सिद्धयोगिसंस्मरणयोगेन ॥ १६ ॥ १४ ॥
सर्वजगद्धितमनुपममतिशयसन्दोहमृद्धिसंयुक्तम् । ध्येयं जिनेन्द्ररूपं सदसि गदत्तत्परं चैव ॥ १ ॥
सिंहासनोपविष्टं छत्रत्रयकल्पपादपस्याधः । सत्त्वार्थसम्प्रवृत्तं देशनया कान्तमत्यन्तम् ॥ २ ॥
आधीनां परमौषधमव्याहतमखिलसम्पदां वीजम् । चक्रादिलक्षणयुतं सर्वोत्तमपुण्यनिर्म्माणम् ॥ ३ ॥
निर्वाणसाधनं भुवि भव्यानामग्र्यमतुलमाहात्म्यम् । सुरसिद्धयोगिवन्द्यं वरेण्यशब्दाभिधेयं च ॥ ४ ॥
परिणत एतस्मिन् सति सद्ध्याने क्षीणकिल्बिषो जीवः । निर्वाणपदासन्नः शुक्लाभोगो विगतमोहः ॥ ५ ॥
चरमावञ्चकयोगात्प्रातिभसञ्जाततत्त्वसन्दृष्टिः । इदमपरं तत्त्वं तद्यदृशतरत्वस्त्यतोऽप्यन्यत् ॥ ६ ॥
तस्मिन् दृष्टे दृष्टं तद्भूतं तत्परं मतं ब्रह्म । तद्योगादस्यापि ह्येषा त्रैलोक्यसुन्दरता ॥ ७ ॥

वचनमागमस्तद्वचनमतींद्रियार्थदृशा सर्वज्ञेन व्यक्तं प्रतिपादितार्थमन्यस्यादृष्टार्थाभिधानशक्त्यभावात्सर्वमिदं वचनमनादि स्यात् सर्वक्षेत्रापेक्षप्रवाहतस्ततं आपातविरुद्धेऽप्यर्थे एतदाज्ञैव प्रमाणमित्येवंप्रकारैरैदंपर्यस्य शुद्धिरवसेया ॥ १२ ॥

एवं त्रयाणां सद्धर्म्मपरीक्षकाणां सप्रपंचं लक्षणमभिधायतद्गतदेशनाविधिमाह ॥

बालादिभावमेवं सम्यग्विज्ञाय देहिनां गुरुणा ॥ सद्धर्मदेशनापि हि कर्त्तव्या तदनुसारेण ॥१३॥

य० वालादीनां भावः परिणामविशेषः स्वरूपं वा तमेवमुक्तनीत्या सम्यगवैपरीत्येन विज्ञायाववुध्य देहिनां जीवानां गुरुणा शास्त्राभिहितस्वरूपेण। यथोक्तं। "धर्म्मज्ञो धर्म्मकर्त्ता च सदा धर्म्मप्रवर्त्तकः। सत्वेभ्यो धर्म्मशास्त्रार्थदेशको गुरुरुच्यते" ॥ सद्धर्मस्य देशनापि हि प्रतिपादना कर्त्तव्या। तदनुसारेण वालादिपरिणामानुरूपेण यस्य यथोपकाराय संपद्यते देशना तस्य तथा विधेयेति ॥ १३ ॥

उ० एवं सद्धर्मपरीक्षकाणां वालादिभेदत्रयमुक्त्वा तद्गतदेशनाविधिमाह। बालादीत्यादि। वालादीनां भावं रुचिविशेषमेव मुक्तरीत्या सम्यगवैपरीत्येन विज्ञायाववुद्धा देहिनां गुरुणा सद्धर्मदेशनापि हि तदनुसारेण वालादिपरिणामानुरूप्येण कर्त्तव्या। तथैव तदुपकारसंपत्तेः ॥ १३ ॥

अत्रैव हेतुद्वारेण व्यतिरेकमाह ॥

यद्भाषितं मुनींद्रैः पापं खलु देशना परस्थाने ॥ उन्मार्गनयनमेतद्भवगहने दारुणविपाकं ॥ १४ ॥

परिणामिन्यात्मनि सति तत्तङ्कनिवाच्यमेतदखिलं स्यात् । अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव ॥ ५ ॥
तद्योगयोग्यतायां चित्रायां चैव नान्यथा नियमात् । परिभावनीयमेतद्विद्वद्भिस्तत्त्वदृष्ट्योच्चैः ॥ ६ ॥
पुरुषाद्वैतं तु यदा भवति विशिष्टमथ च बोधमात्रं वा । भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः ॥ ७ ॥
अग्निजलभूमयो यत्परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ८ ॥
परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति । तन्मात्र एव तत्त्वे भवभवविगमौ कथं युक्तौ ॥ ९ ॥
परिकल्पनापि चैषा हन्त विकल्पात्मिका न सम्भवति । तन्मात्र एव तत्त्वे यदि वाऽभावो न ज्ञातव्याः ॥१०॥
ऐदम्पर्यं शुद्ध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथाग्रहणात् ॥ ११ ॥
तस्माद्यथोक्तमेतत्त्रितयं नियमेन धीधनैः पुम्भिः । भवभवविगमनिबन्धनमालोच्यं शान्तचेतोभिः ॥ १२ ॥
तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत् ॥ १३ ॥
अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः । परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥
गर्भार्थे खल्वेषां भावानां यत्नतः समालोच्य । पुंसा प्रवर्त्तितव्यं कुशले न्यायः सतामेषः ॥ १५ ॥
एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भवविरहसिद्धिफलाः ॥१६॥१६॥
धर्म्मश्रवणे यत्नः सततं कार्यो बहुश्रुतसमीपे । हितकाङ्क्षिभिर्नृसिंहैर्वचनं ननु हारिभद्रमिदम् ॥ १७ ॥

॥ श्रीषोडशकप्रकरणं समाप्तम् ॥

य० यद्यस्माद्भागितमुक्तं। मुनींद्रैः समययुक्तैः पापं खलु वर्त्तते देशना परस्थाने बालसंबंधिनी मध्यमबुद्धेस्तत् संबंधिनी बुधस्य स्थाने किमित्याह । उन्मार्गनयनमुन्मार्गप्रापणमेतद्विपरीतदेशनाकरणं । भवगहने संसारगहने दारुणविपाकं तीव्रविपाकं ते हि विपरीतदेशनयान्यथा चान्यथा च प्रवर्त्तंत इति कृत्वा ॥ १४ ॥

उ० उक्तमेवार्थं व्यतिरेकेण द्रढयति । यदित्यादि । यद् यस्माद्भापितं मुनींद्रैः परमज्ञानिभिः पापं खलु वर्त्तते देशना परस्थाने बालादियोग्या मध्यमादिस्थाने एतद्विपरीतदेशनाकरणमपरिणामस्यातिपरिणामस्य वा जननात् श्रोतुरुन्मार्गनयनं भवगहने संसारकानने दारुणविपाकं वा कुशीलताया महानर्थहेतुत्वप्रतिपादनात् ॥ १४ ॥

कथं पुनर्देशना स्वरूपेण समयोक्तत्वेन । सुंदरापि सती परस्थानेऽपायमित्याह ॥

## हितमपि वायोरौषधमहितं तत् श्लेष्मणो यथात्यंतं ॥ सद्धर्मदेशनौषधमेवं बालाद्यपेक्षमिति ॥ १५ ॥

य० हितमपि योग्यमपि वायोः शरीरगतस्य वातस्य औषधं स्नेहपानादि अहितं, तदेवौषधं श्लेष्मणो यथात्यंतं भवति। तत्प्रकोपहेतुत्वेन सद्धर्म्मदेशनौषधं स्वरूपेण सुंदरमपि तदवज्ञानहेतुत्वेन एवमहितं भवति । बालाद्यपेक्षमिति । बालमध्यमबुद्धिबुधापेक्षं तस्मात्तदपायभीरुणा । तद्धितप्रवृत्तेन च गुरुणा तेषां भावं विज्ञाय देशना विधेयेति शास्त्रोपदेशः॥१५॥

उ० समयोक्तत्वेन स्वरूपतः शोभनाया अपि देशनायाः परस्थानेऽहितत्वे दृष्टांतमाह । हितमित्यादि। तत् प्रसिद्धमौषधं स्नेहपानादि वायोः शारीरवातस्य सात्म्यापादकत्वेन हितमपि यथा श्लेष्मणोऽत्यंतमहितं भवति तत्प्रकोपहेतुत्वादेवं सद्ध-

१ समयज्ञै ।

र्मदेशनौपधं मध्यमादियोग्यं वालाद्यपेक्षं तदज्ञानहेतुतया स्वरूपतः सुंदरमप्यहितं भवति तस्मात्तदपायभीरुणा। तज्ज्ञानं-
विज्ञाय देशना विधेयेत्युपदेशः ॥ १५ ॥

पूर्व्वोक्तमर्थं निगमयति ॥

एतद्विज्ञायैवं यथार्ह(थोचितं) शुद्धभावसंपन्नः ॥ विधिवदिह यः प्रयुंक्ते करोत्यसौ नियमतो वोधिं ॥१६॥

गु० एतद्देशनागतं, विज्ञायावबुध्य, एवमुक्तनीत्या, यथोचितं यथार्हं, शुद्धभावसंपन्नो गुरुः, विधिवद्विधिना यः प्रयुंक्ते प्रवर्त्तयति वालादिविषये, करोति जनयत्यसौ गुरुर्न्नियमतो नियमेन, वोधिमिति ॥ १६ ॥

उ० उक्तमर्थं निगमयन्नाह । एतदित्यादि । एतद्देशनास्वरूपमेवमुक्तप्रकारेण विज्ञाय यथार्हं यथोचितं शुद्धभावसंपन्नो विधिवद्विधिना य इह वालादिलोके प्रयुंक्ते प्रवर्त्तयति सद्धर्मदेशनौपधं असौ नियमतो वोधिं जनयति ॥ १६ ॥

॥ इति प्रथमं षोडशकम् ॥

---

गुरुर्व्वालादीनां देशनां विदधातीत्युक्तं । तत्र विधिमाह ॥

वालादीनामेषां यथोचितं तद्विदो विधिर्गीतः ॥ सद्धर्मदेशनायामयमिह सिद्धांततत्त्वज्ञैः ॥ १ ॥

गु० वालादीनामेषां पूर्वोक्तानां यथोचितं । यथार्हं । तद्विदो वालादिस्वरूपविदो । विधिर्गीतः कथितः । सद्धर्म्मदेशनायां विषये अयमिह वक्ष्यमाणः सिद्धांततत्त्वज्ञैरागमपरमार्थनिपुणैरिति ॥ १ ॥

उ० गुरुर्बालादीनां विधिना देशनां दद्यादित्युक्तं तद्विधिमेवाह बालमित्यादि मुपागानाह बालादीनामित्यादि। बालादीनां प्रागुक्ताना तद्विदस्तत्स्वरूपविदः सद्धर्मदेशनायामयमिह वक्ष्यमाणः सिद्धांततत्त्वज्ञैर्विधिर्गीतः ॥ १ ॥

तत्र बालस्य परिणाममसाश्रित्य हितकारिणीं देशनामाह ॥

**बाह्यचरणप्रधाना कर्त्तव्या देशनेह बालस्य ॥ स्वयमपि च तदाचारस्तदग्रतो नियमतः सेव्यः ॥ २ ॥**

य० बाह्यचरणप्रधाना बाह्यानुष्ठानप्रवरा कर्त्तव्या विधेया देशना प्ररूपणा इह प्रक्रमे बालस्याद्यस्य धर्म्मार्थिनः स्वयमपि चात्मनापि च तदाचारः सचासावाचारश्चोपदिश्यमानाचारस्तदग्रतो बालस्याग्रतः नियमतो नियमेन सेव्यो भवत्याचरणीयः । यदि पुनः स्वयमन्यथा सेव्यते अन्यथा चोपदिश्यते तदा तद्वितथाशंकां जनयत्यतस्तद्भाववृद्धये समुपदिश्यमानं तथैवासेव्यमिति ॥ २ ॥

उ० ततो बालोचितदेशनामाह। बाह्येत्यादि । इह प्रक्रमे बालस्याद्यस्य धर्मार्थिनो बाह्यचरणप्रधाना बाह्याचारमुख्योद्देश्यका देशना कर्त्तव्या स्वयमपि चात्मनापि च तदाचारो बाह्याचारस्तदग्रतो बालस्याग्रतो नियमतः सेव्यो भवति । स्वयमुपदिश्यमानाचाराकरणे वितथाशंकया श्रोतुर्मिथ्यात्ववृद्धिप्रसंगात् ॥ २ ॥

तामेव बालस्य देशनामाह ॥

**सम्यग्लोचविधानं ह्यनुपानत्कत्वमथ धरा शय्या ॥ प्रहरद्वयं रजन्याः स्वापः शीतोष्णसहनं च ॥ ३ ॥**

य० सम्यग्लोचविधानं लोचकरणं कथनीयं भवतीतियोगः । हिशब्दश्चार्थे । सर्वत्राभिसंबंधनीयोऽनुपानत्कत्वं च ॥ नविद्ये-

तेउपानहौ यस्य सोऽयमनुपानत्कस्तद्भावस्तत्त्वं । अथ धरा शय्या धरा पृथ्वी सैव शय्या शयनीयं, नान्यत्पर्यकादि । प्रहरद्वयं रजन्याः स्वापः प्रथमयामे स्वाध्यायकरणं सामान्येनैव साधूनां द्वितीयतृतीयप्रहरयोस्तु स्वापः स्वपनं चतुर्थे पुनः स्वाध्यायकरणं समयनीत्या शीतोष्णसहनं च शीतोष्णयोः सहनं स्वसामर्थ्यापेक्षयार्त्तध्यानादिपरिहारेण ॥ ३ ॥

उ० तस्या एव बालदेशनाया अभिलापमाह । सम्यगित्यादि । सम्यग्यथोपदेशं लोचविधानं यतीनामावश्यकं हिशब्दश्चार्थे सर्वत्र संबंधनीयोऽनुपानत्कत्वं च पादत्राणरहितभावश्च अथ धरैव शय्या नान्यत्पर्यंकादि, रजन्याः प्रहरद्वयं द्वितीयतृतीयौ प्रहरावेव स्वापः शयनं, प्रथमचतुर्थयोः स्वाध्याय एव प्रवृत्तेः, शीतोष्णसहनं तथानुकूलप्रतिकूलपरीषहतितिक्षा ॥ ३ ॥

षष्ठाष्टमादिरूपं चित्रं बाह्यं तपो महाकष्टं ॥ अल्पोपकरणसंधारणं च तच्छुद्धता चैव ॥ ४ ॥

य० षष्ठाष्टमादिरूपं समयप्रसिद्धं चित्रं नानाप्रकारं बाह्यं तपो महाकष्टं दुरनुचरमल्पसत्त्वैर्दुर्बलसंहननैश्चेतिकृत्वा अल्पोपकरणसंधारणं च अल्पमेवोपकरणं । तच्छुद्धता चैव उद्गमादिदोपविशुद्धा ॥ ४ ॥

उ० षष्ठेत्यादि । षष्ठाष्टमादिरूपं समयप्रसिद्धं चित्रं नानाप्रकारं महाकष्टमल्पसत्त्वैर्दुर्बलसंहननैश्च दुरनुचरमितिकृत्वा अल्पस्यैवोपकरणस्यौपधिकादेः संधारणं च तच्छुद्धता चैवोद्गमादिदोपशुद्धा ॥ ४ ॥

गुर्वी पिंडविशुद्धिश्चित्रा द्रव्याद्यभिग्रहाश्चैव ॥ विकृतीनां संत्यागस्तथैकसिक्थादिपारणकं ॥ ५ ॥

य० गुर्वी पिंडविशुद्धिराधाकर्मादित्यागेन चित्रा द्रव्याद्यभिग्रहाश्चैव द्रव्यक्षेत्रकालभावाभिग्रहाः समयप्रसिद्धाः । विकृतीनां संत्यागः क्षीरादीनां । तथैकसिक्थादिपारणकं । एकसिक्थं भोजनं पारणके आदिशब्दादेककवलादिग्रहः ॥ ५ ॥

उ० गुर्व्वीत्यादि ॥ गुर्व्वी पिंडविशुद्धिराधाकर्मिकादित्यागेन द्रव्याद्यभिग्रहा द्रव्यक्षेत्रकालभावाभिग्रहाश्चैव चित्रा नाना-प्रकाराः समयप्रसिद्धा, विकृतीनां क्षीरादीनां मंत्यागः तथैकसिक्थं यत्र तदादिपारणकमुपवासादितपोदिनानंतरदिनभोजनमादितैककनलादिग्रहः ॥ ५ ॥

अनियतविहारकल्पः कायोत्सर्गादिकरणमनिशं च ॥ इत्यादि वाह्यमुच्चैः कथनीयं भवति बालस्य ॥६॥

अनियतविहारकल्पः कायोत्सर्गादिकरणमनिशं च ॥

श्रा० अनियतविहारकल्पः अनियतश्चासौ विहारश्च नैकक्षेत्रवासित्वं । तस्य कल्पः समाचारः कायोत्सर्गादिकरणमनिशं च ॥ वाह्यमुच्चैर्बाह्यमनुष्ठानं प्रतिश्रयप्रत्युपेक्षणप्रमार्ज्जनकालग्रहणादि कायोत्सर्गस्यादिशब्दाल्लिपद्याकरणमासेवनमित्यादि । कथनीयं भवति । बालस्य सर्व्वथोपदेष्टव्यं हितकारीति ॥ ६ ॥

उ० अनियतेत्यादि । अनियतस्याप्रतिवद्धस्य विहारस्य कल्पः समाचारो नवकल्पादिनीत्या च पुनरनिशं कायोत्सर्गादिकरणमादिनातापनादिग्रहः । इत्यादि वाह्यमनुष्ठानमुच्चैरतिशयेन बालस्य कथनीयं भवति । आदिना प्रतिश्रयप्रत्युपेक्षणप्रमार्जनकालग्रहणादिग्रहणम् ॥ ६ ॥

इदानी मध्यमबुद्धेर्देशनाविधिमाह ॥

मध्यमबुद्धेस्त्वीर्यासमितिप्रभृति त्रिकोटिपरिशुद्धं ॥ आद्यंतमध्ययोगैर्हितदं खलु साधुसद्वृत्तम् ॥ ७ ॥

श्र० मध्यमबुद्धेस्तु मध्यमबुद्धेः पुनरीर्यासमितिप्रभृति ईर्यासमित्यादिकं ॥ प्रवचनमातृरूपं साधुसद्वृत्तं समाख्येयमिति-योग. । तच्च कीदृशं साधूनां सद्वृत्तं त्रिकोटिपरिशुद्धं रागद्वेषमोहत्रयपरिशुद्धं । अथवा तिस्रः कोटयो हननपचनक्रयणरूपाः

कृतकारितानुमतिभेदेन श्रूयंते ताभिः परिशुद्धं । अथवा कपच्छेदतापकोटित्रयपरिशुद्धं प्रवचनमात्रंतर्गतत्वात्सकलप्रवचनस्य । तस्यच कपच्छेदतापपरिशुद्धत्वेनाभिधानात्तदेवच वचनमनुष्ठीयमानं सद्वृत्तं साधुसद्वृत्तमेव विशिष्यते आद्यंतमध्ययोगैर्हितदं खल्विति । आदियोगेन मध्ययोगेनान्तयोगेन वा वयसो जीवितव्यस्य वा हितदमुपकारि । अथवा आदियोगेन प्रथमवयोवस्थागतेनाध्ययनादिना, मध्ययोगेन द्वितीयवयोवस्थाभाविनाऽर्थश्रवणादिना, अंतयोगेन चरमवयोऽवस्थाभाविना धर्म्मध्यानादिना । भावनाविशेषरूपेण । हितदं हितकारि । हितफलमेवेति ॥ ७ ॥

उ० मध्यमवुद्धेर्देशनाविधिमाह । मध्यमेत्यादि । मध्यमवुद्धेस्त्वीर्यासमितिप्रभृतिप्रवचनमातृरूपं तिसृभिः कोटिभीरागद्वेपमोहलक्षणाभिर्यद्वा कृतकारितानुमतभेदभिन्नहननपचनक्रयणरूपाभिः प्रतिषेधव्यापारेण परिशुद्धं । यद्वा । तिसृभिः कोटिभिः शास्त्रस्वर्णशोधनकारिणीभिः कपच्छेदतापलक्षणाभिः परिशुद्धं सर्वस्य शास्त्रस्य प्रवचनमात्रंतर्भूतत्वात् साधुसद्वृत्तं खल्वितिनिश्चये आद्यंतमध्ययोगैर्वयोवस्थात्रयगतैरध्ययनार्थश्रवणधर्मध्यानादिधर्मव्यापारै, आवीलए निप्पीलए इत्यागमात्तदविरोध्यल्पमध्यमविकृष्टतपोविशेषरूपैर्वा हितदं भवति ॥ ७॥

एतदेवाह ॥

अष्टौ साधुभिरनिशं मातर इव मातरः प्रवचनस्य ॥ नियमेन न मोक्तव्याः परमं कल्याणमिच्छद्भिः ॥८॥

ग्र० अष्टौ साधुभिरनिशं प्रवचनस्य मातरो न मोक्तव्या इति संबंधः । ताश्च मातर इव पुत्रस्येति गम्यते । प्रवचनस्य

प्रसूतिहेतुत्वेन । हितकारित्वेन च मातृत्वमनसेयं । नियमेनावश्यंभावेन । कीदक्षैः साधुः : कल्याणमिच्छद्भिरैहलौकिकपारलौकिकपरमकल्याणकामैः ॥ ८ ॥

उ० ततश्च । अष्टावित्यादि । साधुभिरनिशं निरंतरमष्टौ प्रवचनस्य मातर ईर्यासमित्याद्या :रित्रात्मनः प्रसूतिहेतुत्वेन हितकारित्वेन च मातर इव जनन्य इव नियमेनावश्यंभावेन न मोक्तव्याः । कीदृशैः साधुः परमं निरुपमं कल्याणं मगलमिच्छद्भिः ॥ ८ ॥

एतच्चसमाख्येयं ॥

एतत्सचिवस्य सदा साधोर्न्नियमान्न भवभयं भवति॥ भवति च हितमत्यंतं फलदं विधिनाऽऽगमग्रहणम् ९

य० एतत्सचिवस्य प्रवचनमातृसहितस्य सर्वदा सर्व्वकालं सा॰ोर्यतेर्नियमान्नियमेन न भवभयं भवति संसारभयं न जायते निःश्रेयसविपर्ययेच्छानिष्पत्तेः । भवति च संपद्यते च । प्रवचनमातृविधानसंपन्नस्य हितं भाव्यपायपरिहारसारत्वेनात्यंतंप्रकर्षवृत्त्या फलदं फलहेतुर्विधिना विनयबहुमानादरादिना । आगमग्रहणं वाचनादिरूपेणेति ॥ ९ ॥

उ० एतदित्यादि । एतत्सचिवस्य प्रवचनमातृसहितस्य सदा सर्वकालं साधोर्नियमान्निश्चयेन न भवभयं भवति। तद्विरोध्युत्कटनिःश्रेयसास्थानिष्पत्तेः । भवति च संपद्यते च प्रवचनमातृविधानसंपन्नस्य हितं भाव्यपायव्ययेनात्यंतं प्रकर्षवृत्त्या फलदं फलहेतुर्विधिना मंडलिनिपद्यादिरूपेण सूत्रोक्तेनागमग्रहणं वाचनादिव्यापारेणाधिकारिकर्तृकत्वात्प्रवचनमातृरहितस्य त्वतथात्वादागमग्रहणमत्यंतफलदं न भवति ॥ ९ ॥

आगमग्रहणस्य गुर्व्वधीनत्वात्तद्गतमप्युपदेष्टव्यमित्याह ॥

गुरुपारतंत्र्यमेव च तद्बहुमानात्सदाशयानुगतं ॥ परमगुरुप्राप्तेरिह वीजं तस्माच्च मोक्ष इति ॥ १० ॥

य० गुरुपारतंत्र्यमेव च गुर्व्वायत्तत्वं। तद्बहुमानाद्गुरुविषयाऽन्तरप्रीतिविशेषात्। सदाशयानुगतं सदाशयः संसारक्षयहेतुर्गुरुरयं ममेत्येवंभूतः कुशलपरिणामस्तेनानुगतं गुरुपारतंत्र्यं । परमगुरुप्राप्तेरिह सर्व्वज्ञप्राप्तेर्व्वीजं गुरुवहुमानाज्जन्मांतरे तथाविधपुण्योपादानेन सर्व्वज्ञदर्शनसंभवात् गुरुपारतंत्र्यं सर्व्वज्ञप्राप्तिवीजं भवति। तस्माच्चैवंविधाद्गुरुपारतंत्र्यान् मोक्षः॥ १०

उ० गुर्वित्यादि ॥ गुरुपारतंत्र्यमेव च गुर्वाज्ञावशवर्त्तित्वमेव च तद्बहुमानाद्गुरुविषयांतरप्रीतिविशेषान्न तु विष्टिमात्रज्ञानात्। सदाशयेन भवक्षयहेतुरयं मे गुरुरित्येवंभूतशोभनपरिणामेन नतु जात्यादिसमसंवंधज्ञानेनानुगतं सहितं परमगुरुप्राप्तेः सर्वज्ञदर्शनस्येह जगति वीजं गुरुवहुमानात्तथाविधपुण्यसपत्त्या सर्वज्ञदर्शनसंभवात् तस्माच्च हेतोर्मोक्ष इति हेतोर्गुरुपारतंत्र्यं साधुनावश्यं विधेयमिति सोपस्कारं व्याख्येयं ॥ १० ॥

पूर्वोक्त एव वस्तुनि सद्वृत्तादौ क्रियासंवंधं दर्शयति॥

इत्यादि साधुवृत्तं मध्यमबुद्धेः सदा समाख्येयम् ॥ आगमतत्त्वं तु परं बुधस्य भावप्रधानं तु ॥११॥

य० मध्यमवुद्धेरेवमादि साधुवृत्तं प्रस्तुतं। सदा समाख्येयं प्रकाशनीयं। आगमतत्त्वं तु पूर्व्वोक्तं परं केवलमेव वुधस्य प्राङ्निरूपितस्य भावप्रधानं तु परमार्थसारं समाख्येयमिति ॥ ११ ॥

उ० इत्यादीत्यादि । इत्याद्युक्तं साधुवृत्तं मध्यमबुद्धेः सदा निरंतरं समाख्येयं प्रकाशनीयं । आगमतत्त्वं तु प्रागुक्तं परं केवलं बुधस्य भावप्रधानं तु परमार्थसारमेव समाख्येयं ॥ ११ ॥

कृतसंबंधमेव बुधोपदेशमाह ॥

**वचनाराधनया खलु धर्मस्तद्बाधया त्वधर्म इति ॥ इदमत्र धर्मगुह्यं सर्वस्वं चैतदेवास्य ॥ १२ ॥**

य० वचनाराधनया आगमाराधनयैव खलुशब्द एवकारार्थः धर्मः श्रुतचारित्ररूपः संबध्यते (संपद्यते) तद्बाधया तु वचनबाधया त्वधर्म्म इति । इदमत्र विधिप्रतिषेधरूपं वचनमागमाख्यं धर्म्मगुह्यंधर्म्मरहस्यं । सर्व्वस्वं चैतदेवास्य अस्य धर्म्मस्य एतद्वचनमेव सर्वस्वं सर्वसारो वर्त्तत इति ॥ १२ ॥

उ० प्राप्तसंगतिकं बुधस्योपदेश्यमेव स्पष्टमाह। वचनेत्यादि ॥ वचनाराधनया खल्वागमाराधनयैव खलुशब्द एवकारार्थः । धर्मः श्रुतचारित्ररूपः संपद्यते तद्बाधया तु महाकष्टकारिणोऽप्यधर्म इति हेतोरिदं विधिनिषेधरूपं वचनं धर्मगुह्यं धर्मरहस्यं सर्वस्वं सर्वसारश्चैतदेव वचनमेवास्य धर्मस्य ॥ १२ ॥

अथ किमर्थं बुधस्यैवमुपदेशः क्रियते सकलानुष्ठानोपसर्जनीभावापादनद्वारेणेत्याशंक्य तन्मूलत्वं सकलानुष्ठानानामुपदर्शयन्नाह ॥

**यस्मात्प्रवर्त्तकं भुवि निवर्त्तकं चांतरात्मनो वचनं ॥ धर्मश्चैतत्संस्थो मौनींद्रं चैतदिह परमं ॥ १३ ॥**

य० यस्मात्प्रवर्त्तकं स्वाध्यायध्यानादिषु विधेयेषु, भुवि भव्यलोके निवर्त्तकं च हिंसानृतादिभ्यः सकाशादंतरात्मनो मनसो

वचनमागमरूपं । धर्म्मश्चैतत्संस्थो वचनसंस्थो वचने संतिष्ठत इति कृत्वा मौनींद्रं चैतद्वचनमिह प्रक्रमे परमं प्रधानं ॥ एतदुक्तं "सर्व्वज्ञोक्तेन शास्त्रेण विदित्वा योऽत्र तत्त्वतः ॥ न्यायतः क्रियते धर्म्मः स धर्म्मः स च सिद्धये" ॥ १३ ॥

उ० अथ किमिति सकलानुष्ठानोपसर्जनीभावापादनेन वचनस्यैव प्राधान्यं ख्याप्यत इत्याशंकायामाह। यस्मादित्यादि । यस्मात् प्रवर्त्तकं भुवि भव्यलोके स्वाध्यायादौ विधेये । निवर्त्तकं च हिंसादेरंतरात्मनो मनसो वचनं । धर्मश्च प्रवृत्तिनिवृत्तिफलजननव्यापारीभूत एतस्मिन् वचने ज्ञापकतासंबंधेन संदिष्ट इत्येतत्संस्थः मौनींद्रं मुनीद्रोक्तेनाबाधितप्रामाण्यं चैतद्वचनमिह प्रक्रमे परमं अनुष्ठानानुपजीविप्रामाण्यं तत इदमेव प्रधानमुद्धुष्यतेऽनुष्ठानादिकं चैतदुपजीवकत्वेनोपसर्जनीक्रियत इति भावः ॥ १३ ॥

किमेवं वचनमाहात्म्यं ख्याप्यत इत्याह ॥

**अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनींद्र इति ॥ हृदयस्थिते च तस्मिन्नियमात्सर्व्वार्थसंसिद्धिः १४**

य० अस्मिन्प्रवचने आगमे हृदयस्थे सति हृदयपतिष्ठिते सति । हृदयस्थश्चित्तस्थस्तत्त्वतः परमार्थेन मुनींद्रः सर्व्वज्ञ इति कृत्वा हृदयस्थिते च तस्मिन् भगवति मुनींद्रे नियमान्नियमेन सर्व्वथा संसिद्धिः सर्वथा निष्पत्तिः ॥ १४ ॥

उ० वचनस्यैव माहात्म्यमभिष्टौति च। अस्मिन्नित्यादि। अस्मिन् वचने हृदयस्थे सति हृदयस्थः स्मृतिद्वारा तत्त्वतोमुनींद्रः स्वतंत्रवक्तृत्वरूपतत्संबंधशालित्वात् इतिः पादसमाप्तौ। हृदयस्थिते च तस्मिन् मुनींद्रे नियमान्निश्चयेन सर्वार्थसंपत्तिर्भवति १४

विद्वद्भिः सदैव सर्वकालमेव विज्ञेयं । सर्वकालव्यापिता लक्षणस्यान्यथात्वाभावमुपदर्शयति । सर्वैरागमैः परिशुद्धं निर्दोषं
यदादिमध्यांतकल्याणमादिमध्यावसानेषु सुंदरमिति योर्थः ॥ १ ॥
उ० सन्मार्गदेशनाविधिरुक्तोऽथ धर्मस्यैव स्वलक्षणमभिधित्सुराह । अस्येत्यादि । अस्य धर्मस्य लक्ष्यते तदितरव्यावृत्तं वस्तु-
नेनेति लक्षणं स्वं च तल्लक्षणं च स्वलक्षणमिदं वक्ष्यमाणं बुधैः सदैव विज्ञेयं लक्षणस्य कदाचिदपरावृत्तेः स्वलक्षणं कीदृशं
सर्वैरागमैः परिशुद्धं सामान्यतस्तस्य सार्वतांत्रिकत्वात् तथा यत् स्वलक्षणमादिमध्यांतेषु कल्याणमंतरालाप्राप्तेः सदा
सुंदरमित्यर्थः ॥ १ ॥
किं पुनर्द्धर्मस्य स्वलक्षणमित्याह ॥
धर्मश्चित्तप्रभवो यतः क्रियाधिकरणाश्रयं कार्यं ॥ मलविगमेनैतत्खलु पुष्ट्यादिमदेष विज्ञेयः ॥ २ ॥
ग० प्रभवत्यस्मादिति प्रभवः । चित्तरूपत्वाच्चित्तहेतुकत्वाच्चरित्रं चित्तं तच्चासौ प्रभवश्च चित्तप्रभवः स धर्मो विज्ञेयः ।
विशेषणसमारांगीकरणाद्यच्छब्देन चित्तमेव परामृश्यते । यतश्चित्तात्क्रिया प्रवर्त्तते विधिप्रतिषेधविषया । सा च क्रिया कार्यं
चित्तनिष्पाद्यत्वात् । तच्च स्वरूपेण क्रियालक्षणं कार्यं कीदृशं यच्चित्तात्प्रवर्त्तत इत्याह । अधिकरणाश्रयमिह यद्यप्यधिक-
रणशब्दः सामान्येनाधारवचनस्तथापि प्रक्रमाच्चित्तस्याधिकरणमाश्रयः शरीरं चित्तस्य शरीराधारत्वात् । क्रियालक्षणं
कार्यमधिकरणाश्रयं शरीराश्रयं यतः प्रवर्त्तते चित्तात्तच्चित्तं धर्म इत्युक्तं । चित्तात्प्रभवतीतिपुनरुच्यते चित्तस्य । एतत्पु-
ष्ट्यादिमदित्यनेन सह संबंधो न स्यात् । यत्इत्यनेनापि केवलेन चित्तं न गृह्येत । तथा धर्मस्यैव विशेष्यत्वं स्यान्न

चित्तस्य ततश्च चित्तस्य विशेषणपदैरभिसंबंधो न स्यादितिदोषः । एतदेव चित्तं मलविगमेन रागादिमलापगमेन पुष्ट्यादिमत् पुष्टिशुद्धिद्वयसमन्वितमेष धर्मो विज्ञेय इति ॥ २ ॥

उ० किं धर्मस्य स्वलक्षणमित्याह । धर्मइत्यादि । धर्मश्चित्तप्रभवो मानसाकूतजो नतु सम्मूर्च्छनजतुल्यक्रियामात्रं यतो धर्मात् क्रियाया विहितनिषिद्धाचरणत्यागरूपाया अधिकरणमधिकारस्तदाश्रयं कार्यं भवनिर्वेदादि भवति एष मार्गानुसारी धर्मो लक्ष्यो नत्वभव्यादिगतोपि स च मलविगमेन पुष्ट्यादिमत् पुष्टिशुद्धिमदेतच्चित्तं विज्ञेयो लक्षणनिर्देशोयं ॥ २ ॥

मलविगमेनैतत् खलु पुष्टिमदित्युक्तं तत्र के मलाः कथं च पुष्ट्यादिमत्त्वं चित्तस्येत्येवं वक्तुकामनायां श्रोतुरिदमाह ॥

रागाद्यो मलाः खल्वागमसद्योगतो विगम एषां । तदयं क्रियात एव हि पुष्टिः शुद्धिश्च चित्तस्य ॥३॥

य० इह मलाः प्रक्रमाच्चित्तस्यैव संबंधिनः परिगृह्यंते । ते च रागादयो रागद्वेषमोहा जातिसंगृहीता व्यक्तिभेदेन तु भूयांसः। खलु शब्दावधारणाद्रागादय एव नान्ये। आगमनमागमः सम्यक्परिच्छेदस्तेन सद्योगः सद्व्यापारः॥ आगमसहितो वा यः सद्योगः सत्क्रियारूपः । ततः सकाशाद्विगम एषां रागादीनां मलानामपगमः संजायते । तत्तस्मादयमागमसद्योगः क्रिया वर्त्तते सर्वापि शास्त्रोक्ता विधिप्रतिषेधात्मिका। अत एव ह्यागमसद्योगात् क्रियारूपात्पुष्टिर्वक्ष्यमाणस्वरूपा शुद्धिश्च चितस्य संभवति ॥ ३ ॥

उ० मलविगमेन पुष्ट्यादिमत्त्वं चित्तेऽस्य कथं स्यादित्येतद्विवक्षुराह। रागादय इत्यादि। इह मलाश्चित्तस्य रागादयः खलु रागद्वेषमोहा एव खलुरेवार्थे एषां रागादीनां मलानां । आगमनं आगमः सम्यक्परिच्छेदः तेन सद्योगः सद्व्यापारः सत्

कथं पुनरिदमनुबन्धिद्वयं न भवतीत्याह ॥

**न प्रणिधानाद्याशयसंविद्व्यतिरेकतोऽनुबन्धि तत् । भिन्नग्रंथेर्निर्म्मलबोधवतः स्यादियं च परा ॥ ५ ॥**

य० प्रणिधानाद्याशयसंविद्व्यतिरेकत इति प्रणिधानादयश्च ते आशयाश्च वक्ष्यमाणाः पञ्चाध्यवसायस्थानविशेषास्तेषां संवित्संवित्तिः संवेदनमनुभवस्तस्या व्यतिरेकोऽभावस्तस्मात्तदाशयसंविद्व्यतिरेकेणैतद्द्वयं पुष्टिशुद्धिरूपं नानुबन्धि भवति । तस्मादेतद्द्वयमनुबन्धिकर्तुकामेन प्रणिधानादिषु यतितव्यं । इयं च कस्येत्याह । भिन्नग्रंथेरपूर्व्वकरणबलेन कृतग्रन्थिभेदस्य तत्प्रभावादेव निर्म्मलबोधवतो विमलबोधसंपन्नस्य स्याद्भवेदियं च प्रस्तुता प्रणिधानाद्याशयसंवित्परा प्रधाना ॥ ५ ॥

उ० एतद्द्वयानुबन्धसामग्री कस्य न भवतीत्याह । नेत्यादि । प्रणिधानादयो वक्ष्यमाणा आशया अध्यवसायस्थानविशेषास्तेषां संविदनुभूतिस्तस्याव्यतिरेकतोऽभावाद् तत्पुष्टिशुद्धिद्वयमनुबन्धि न भवति । तस्मादियमेतदनुबन्धसामग्रीयं च भिन्नग्रंथेरपूर्वकरणेन कृतग्रन्थिभेदस्य तन्महिम्नैव निर्मलबोधवतः परा प्राधान्यका स्यात् ॥ ५ ॥

प्रणिधानाद्विराशय उक्तस्तमेव संख्याविशिष्टं नामग्राहमाह ॥

**प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदतः प्रायः । धर्म्मज्ञैराख्यातः शुभाशयः पञ्चधाऽत्र विधौ ॥ ६ ॥**

य० प्रणिधिश्च प्रवृत्तिश्च विघ्नजयश्च सिद्धिश्च विनियोगश्च एत एव भेदाः तानाश्रित्य कर्म्मणि ल्यब्लोपे पञ्चमी प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदतः प्रायइतिप्राचुर्येण शास्त्रेषु धर्म्मज्ञैर्धर्मवेदिभिराख्यातःकथितः शुभाशयः शुभपरिणामः पञ्चधा पञ्चप्रकारः अत्र प्रक्रमे विधौ कर्त्तव्योपदेशे प्रतिपादिताशयपञ्चकव्यतिरेकेण । पुष्टिशुद्धिलक्षणं द्वयमनुबन्धि न भवतीति ॥६॥

इदानीं प्रवृत्तिमाह ॥

**तत्रैव तु प्रवृत्तिः शुभसारोपायसङ्गतात्यन्तम् । अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव ॥ ८ ॥**

य० तत्रैव तु विवक्षितप्रतिपन्नधर्म्मस्थाने प्रवृत्तिरेवं स्वरूपा भवति । सा च न क्रियारूपा किंत्वाशयरूपा शुभसारोपायसङ्गताऽत्यन्तं बाह्यक्रियाद्वारेण विशेषणं सर्वं योजनीयं शुभः सुन्दरः सारः प्रकृष्टो नैपुण्यान्वितो य उपायस्तेन सङ्गता युक्ता अधिकृते धर्म्मस्थाने यत्नातिशयः प्रयत्नातिशयस्तस्मात्सा संपद्यते। औत्सुक्यविवर्जिता चैव औत्सुक्यं त्वराऽभिलापातिरेकस्तेन विवर्जिता विरहिता प्रयत्नातिशयमेव विधत्ते नत्वौत्सुक्यमिति भावः ॥ ८ ॥

उ० प्रवृत्तिं लक्षयति । तत्रेत्यादि । तत्रैवाधिकृतधर्मस्थान एवोद्देश्यत्वाख्यविषयतया या प्रवृत्तिः शुभः सुन्दरः सारो नैपुण्यान्वितो यः उपायः प्रेक्षोत्प्रेक्षादिस्तेन सङ्गता साध्यत्वाख्यविषयतया तत्संबद्धाऽधिकृते धर्मस्थाने यो यत्नातिशयोऽप्रमादभावनाजनितो विजातीयः प्रयत्नः तस्मादौत्सुक्यमकाले फलवाञ्छा तेन विवर्जिता चैवाकालौत्सुक्यस्य तत्त्वत आर्त्तध्यानरूपत्वात् सहेतुस्वरूपानुबन्धशुद्धः प्रवृत्त्याशयो ज्ञेयः कथंचित्क्रियारूपत्वेऽप्यस्य कथंचिदाशयरूपत्वात् ॥ ८ ॥

अधुना विघ्नजयमाह ॥

**विघ्नजयस्त्रिविधः खलु विज्ञेयो हीनमध्यमोत्कृष्टः । मार्ग इह कण्टकज्वरमोहजयसमः प्रवृत्तिफलः ॥९॥**

य० विघ्नजयस्त्रिविधः खलु विज्ञेय इति विघ्नस्य धर्म्मान्तरायस्य जयः पराभवो निराकरणं स त्रिविधस्तिस्रो विधा अस्येति त्रिविधस्त्रिभेदः खलुशब्दो वाक्यालंकारे त्रैविध्यमेवाह । हीनमध्यमोत्कृष्टः हीनमध्यमाभ्यां सहित उत्कृष्टः एको

हीनो विघ्नजयो अपरो मध्यमोऽपरस्तूत्कृष्ट इति । त्रैविध्यमेव निदर्शनेन साधर्म्यगर्भमाह ॥ मार्ग इह कंटकज्वरमोहजयसम इति । मार्गे प्रवृत्तस्य पुंसः कण्टकविघ्नजयसमो ज्वरविघ्नजयसमो मोहविघ्नजयसमः । इदमत्र तात्पर्य, यथा नाम कस्यचित्पुरुषस्य प्रयोजनवशान्मार्गप्रवृत्तस्य कण्टकाकीर्णमार्गावतीर्णस्य कण्टकविघ्नो विशिष्टगमनविघातहेतुर्भवति तद्रहिते तु पथि प्रवृत्तस्य गमनं निराकुलं सञ्जायते । एवं कण्टकविघ्नजयसमः प्रथमो विघ्नजयः कण्टकाश्चेह सर्व्व एव प्रतिकूलाः शीतोष्णादयो धर्म्मस्थानविघ्नहेतवस्तैरभिद्रुतस्य धर्म्मार्थिनोऽपि निराकुलप्रवृत्त्यसिद्धेः । आशयभेदश्चायं बाह्यकण्टकविघ्नजयेनोपलक्ष्यते । तथा तस्यैव ज्वरवेदनाभिभूतशरीरस्य विह्वलपादन्यासस्य निराकुलं गमनं चिकीर्षोरपि । कर्तुमशक्नुवतः कण्टकविघ्नादभ्यधिको ज्वरविघ्नस्तज्जयस्तु विशिष्टगमनप्रवृत्तिहेतुर्निराकुलशरीरत्वेन परिदृश्यते इहापि ज्वरकल्पाः शारीरा एव रोगाः परिगृह्यन्ते तदभिभूतस्य विशिष्टधर्म्मस्थानाराधनाक्षमत्वात् ॥ ज्वरकल्पशरीरदुःखविघ्नजयस्तु सम्यग्धर्म्मस्थानाराधनाय प्रभवति । तस्यैवाध्वनि जिगमिषोः पुरुषस्य दिङ्मोहकल्पो मोहविघ्नस्तेनाभिभूतस्य पुनः पुनः प्रेर्यमाणस्याप्यध्वनीनैर्न गमनोत्साहः कथंचित्प्रादुर्भवति । मोहविघ्नजयस्तु स्वयमेव मार्गसम्यक्परिज्ञानात्परैश्चोच्यमानमार्गश्रद्धानान्मन्दोत्साहतापरित्यागेन गमनप्रवृत्तिहेतुर्भवति । इहापि दिङ्मोहगमनविघ्नकल्पो मिथ्यात्वादिजनितो मनोविभ्रमः परिगृह्यते । तज्जयस्तु मिथ्यात्वादिदोषनिराकरणद्वारेण । मनोविभ्रमापसारकत्वेन प्रस्तुतधर्म्ममार्गेऽनवरतप्रयाणकप्रवृत्त्या गमनाय संपद्यते । एवं कण्टकज्वरमोहविघ्नजयसमः त्रिविधो विघ्नजय उक्तः । स एव विशिष्यते । प्रवृत्तिफलः प्रवृत्तिर्धर्म्मस्थानविषया फलमस्याशयविशेषस्य विघ्नजयसंज्ञितस्येति प्रवृत्तिफलः ॥ ९ ॥

उ० विघ्नजयं लक्षयति। विघ्नेत्यादि। विघ्नस्य धर्मान्तरायस्य जयः खलु त्रिविधो विज्ञेयः प्रतियोगिभेदाद्धीनमध्यमाभ्यां सहित उत्कृष्ट एको हीनो विघ्नजयोऽपरो मध्यमोऽन्यस्तूत्कृष्ट इति त्रैविध्यमेव निदर्शनगर्भविशेषणेन समर्थयति मार्गे प्रवृत्तस्य पुंस इह जगति ये कण्टकज्वरमोहाः कण्टकपादवेधज्वरोत्पत्तिदिग्मोहोत्पादा विघ्ना अस्खलिताविह्वलनियतदिक्प्रवृत्तिप्रतिबंधकास्तज्जयाश्च विशिष्टप्रवृत्तिहेतवस्तत्समोऽयं धर्मस्थानेपि कण्टकानां शीतोष्णादीनां ज्वरकल्पानां शारीररोगाणां दिग्मोहकल्पस्य च मिथ्यात्वस्य जयः परिषहतितिक्षयारोग्यहेतुविहिताहारादिप्रवृत्तिमनोविभ्रमापनायकसम्यक्त्वभावनया च जनितो यथोत्तरमधिकस्त्रिविधोऽपि समुदितः प्रवृत्तिरधिकृतधर्मस्थानविषया फलं यस्य स तथाऽल्पस्यापि विघ्नस्य सत्त्वे कार्यासिद्धेरित्यवसेयं ॥ ९ ॥

एवं तृतीयमाशयभेदं प्रतिपाद्य सिद्धिरूपमाशयमाह ॥

**सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया। अधिके विनयादियुता हीने च दयादिगुणसारा ॥१०॥**

म० सिद्धिर्नामाशयभेदः सा च स्वरूपतः कीदृशी। तत्तद्धर्म्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया तस्य तस्य विवक्षितस्य धर्म्मस्थानस्याहिंसादेरवाप्तिः प्राप्तिः सिद्धिरुच्यते। सा च तात्त्विकीदं च विशेषणं तत्तद्धर्म्मस्थानावाप्तेरतात्त्विकत्वपरिहारार्थं। नह्यतात्त्विकी सा सिद्धिर्भवितुमर्हति। सा च सिद्धिरधिके पुरुषविशेषे सूत्रार्थोभयवेदिन्यभ्यस्तभावनामार्गे तीर्थकल्पे गुरौ विनयादियुता विनयवैयावृत्त्यबहुमानादिसमन्विता हीने च स्वप्रतिपन्नधर्म्मस्थानापेक्षया हीनगुणे निर्गुणे वा।

सामान्येनैव प्राणिगणे दयादिगुणसारा दयादानव्यसनपतितदुःखापहारादिगुणप्रधानाऽधिकगुणहीनग्रहणान्मध्यमोपकार-फलवत्यपि सा सिद्धिरित्युक्तं भवति ॥ १० ॥

उ० सिद्धिं लक्षयति । सिद्धिरित्यादि । सिद्धिश्चतुर्थाशयरूपेहाशयविचारे तस्य तस्याभिप्रेतधर्मस्थानस्याहिंसादेरवाप्तिस्तात्त्विकी स्वानुषंगेण नित्यवैराणामपि वैरादिविनाशकत्वेन पारमार्थिकी ज्ञेया । सा च सिद्धिरधिके पुरुषविशेषे सूत्रार्थोभयनिष्णाते तीर्थकल्पे गुरौ विनयादिना युताऽऽदिना वैयावृत्त्यबहुमानादिग्रहः हीने च स्वापेक्षया हीनगुणे निर्गुणे वा दयादिगुणेन दयादानदुःखोद्धाराद्यभिलापेण सारा प्रधाना । उपलक्षणान्मध्यमोपकारफलवतीत्यप्यवसेयं ॥ १० ॥

एवं सिद्धिमभिधाय तत्फलभूतमेव विनियोगमाह ॥

**सिद्धेश्चोत्तरकार्यं विनियोगोऽवन्ध्यमेतदेतस्मिन् । सत्यद्वयसंपत्त्या सुन्दरमिति तत्परं यावत् ॥ ११ ॥**

य० सिद्धेश्चोत्तरकार्यं विनियोगः सिद्धेरुत्तरकालभावि। कार्यं विनियोगो नामाशयभेदो विज्ञेय इति संबंधनीयं। अवन्ध्यं सफलं, न कदाचिन्निष्फलमेतद्धर्म्मस्थानमहिंसादि एतस्मिन्विनियोगे सति सञ्जाते अन्वयसंपत्त्याऽविच्छेदसंपत्त्या हेतुभूतया सुन्दरमेतत्पूर्व्वोक्तं धर्म्मस्थानमितिशब्दो भिन्नक्रमः परमित्यनेन संबंधनीयो यावत्परमिति तद्धर्म्मस्थानं परं प्रकृष्टं यावत्संपन्नमनेन विनियोगस्याऽनेकजन्मान्तरसन्तानक्रमेण प्रकृष्टधर्म्मस्थानावाप्तिहेतुत्वमावेदयति। इदमत्र हृदयं अहिंसादिलक्षणधर्म्मस्थानावाप्तौ सत्यां स्वपरयोरुपकारायाविच्छेदेन तस्यैव धर्म्मस्थानस्य विनियोगो व्यापारः स्वात्मतुल्यपरफलकर्तृत्वमभिधीयते । एवं हि स्वयंसिद्धस्य वस्तुनो निनियोग· सम्यकृतो भवति । यदि परस्मिन्नपि तत्सम्पद्यते विशेषेण

नियोगो नियोजनमध्यारोपणमितिकृत्वा आशयभेदत्वाच्च विनियोगस्यावन्ध्यत्वाप्रतिपादनप्रक्रियया स्वरूपोपकारहेतुत्वं दर्शयति । सूत्रकारः ॥ ११ ॥

उ० विनियोगं लक्षयति । सिद्धेश्चेत्यादि ॥ सिद्धेश्चोत्तरकालभावकार्यं विनियोगो नामाशयभेदो विज्ञेयः एतद्विनियोगाख्यं सिद्ध्युत्तरकार्यमवन्ध्यं न कदाचिन्निष्फलमेतस्मिन् रति सञ्जातेऽन्वयसंपत्त्या भंगेऽपि सुवर्णघटन्यायेन सर्वथा फलानपगमाद्विनियोजितधर्मापगमेपि भूयो झटिति तत्संस्कारोद्बोधसंभवादनेकजन्मान्तरसन्तानक्रमेणाविच्छेदसंपत्त्या हेतुभूतया इतिहेतोस्तत्सिद्ध्युत्तरकार्यं परं शैलेशीलक्षणं सर्वोत्कृष्टधर्मस्थानं यावत्सुन्दरं परोपकारगर्भक्रियाशक्त्या तीर्थकरविभूतिपर्यन्तसुन्दरविपाकार्थकं अयं विनियोगफलोपदेशः लक्षणं तु स्वात्मतुल्यपरफलकर्तृत्वमित्यवसेयं ॥ ११ ॥

एवमेतान् प्रणिधानादीनभिधाय कथंचित्क्रियारूपत्वप्राप्तावेषामाशयविशेषत्वसमर्थनायाह ॥

**आशयभेदा एते सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः । भावोयमनेन विना चेष्टा द्रव्यक्रिया तुच्छा ॥ १२ ॥**

यं० आशयभेदा आशयप्रकारा एते पूर्वोक्ताः सर्वेऽपि हि सर्व्वे एव कथंचित्क्रियारूपत्वेऽपि तदुपलक्ष्यतया तत्त्वतः परमार्थेनावगन्तव्या विज्ञेयाः परिणामविशेषा एत इति । शुभाशयः पञ्चधा त्रिविधो वेत्युक्तं स किं भावादपरोऽथ भाव एवेत्याशंकायामिदमाह भावोऽयमिति । अयं पञ्चप्रकारोप्याशयो भाव इत्यभिधीयतेऽनेन भावेन विना चेष्टा व्यापाररूपा कायवाङ्मनःसङ्गता द्रव्यक्रिया तुच्छा भावविकला क्रिया द्रव्यक्रिया तुच्छा असारा स्वफलाऽसाधकत्वेन कस्मात्पुनर्द्रव्यक्रियायास्तुच्छत्वापादनेन भावप्राधान्यमाश्रीयत इत्याह ॥ १२ ॥

क्रमेण तस्मिन् जन्मन्यपरस्मिन् वा द्रुतमविलंबितं शुद्धेः कर्मक्षयस्यान्तःप्रकर्षोऽवाप्यते एतदिह प्रस्तुतं भावस्वरूपं धर्मस्य नान्यत् एतदित्यत्र विधेयपदलिङ्गविवक्षया नपुंसकत्वं तेन न भावस्य प्रस्तुतत्वादेप इति निर्देशप्राप्तिः। अयं भावः परमो योगो वर्त्ततेऽध्यात्मगर्भत्वात् कीदृशो विशिष्टो मुक्तौ रसोऽभिलाषो यत्र स तथा अयं भाव एव विशिष्टमुक्ते रस आस्वाद इति वा व्याख्येयम् ॥ १३ ॥

ननु च भावाच्छुद्ध्यन्तोऽवाप्यत इत्युक्तं शुद्धिश्च पापक्षयेण प्रागुक्ता कथं पुनः पापमतीतेऽनादौ काले यद्भूयोभूय आसेवितं तत्त्यक्त्वा भावमेवाभिलपति न पुनः पापं बहु मन्यत इत्याह ॥

**अमृतरसास्वादज्ञः कुभक्तरसलालितोऽपि बहुकालम्। त्यक्त्वा तत्क्षणमेनं वाञ्छत्युच्चैरमृतमेव ॥ १४ ॥**

य० अमृतरसस्यास्वादस्तं जानातीत्यमृतरसास्वादज्ञः कुभक्तरसलालितोऽपि कुभक्तानां कदशनानां यो रसस्तेन लालितोऽप्यभिरमितोऽपि पुरुषो बहुकालं प्रभूतकालं नैरन्तर्यवृत्त्याऽतएव "कालाध्वनोरत्यन्तसंयोगे" द्वितीया। त्यक्त्वा परित्यज्य तत्क्षणं तस्मिन्नेव क्षणे, शीघ्रमेनं कुभक्तरसममृतरसज्ञत्वेन वांछत्यभिलषत्युच्चैरमृतमेव सुरभोज्यममृतमभिधीयते। तद्धि सर्व्वरससंपन्नत्वात् स्पृहणीयमतितरां भवति ॥ १४ ॥

उ० ननु भावाच्छुद्ध्यंतोऽवाप्यत इत्युक्तम्। तत्रैव चाभिलापः कथं स्याद्भूयो भवाभ्यस्ते पाप एव विरोधिनि बहुमानसंभवादित्यत आह। अमृतेत्यादि। अमृतरसस्यास्वादज्ञः पुरुषः कुभक्तानां कदशनानां रसेन लालितोऽप्यभिरमि-

तोपि बहुकालं नैरन्तर्यवृत्त्या प्रभूतकालं । त्यक्त्वा तत्क्षणममृतलाभोपायश्रवणक्षण एवैनं कुभक्तरसं वांछत्युच्चैरतिशयेन। नामृतमेव तस्य निरुपाधिस्पृहणीयत्वात् ॥ १४ ॥

**एवं त्वपूर्वकरणात्सम्यक्त्वामृतरसज्ञ इह जीवः। चिरकालासेवितमपि न जातु बहुमन्यते पापम् ॥१५॥**

य० एवं त्वपूर्वकरणात् । एवमेवापूर्वकरणादपूर्वपरिणामात्सम्यक्त्वामृतरसज्ञ इह जीवः सम्यक्त्वामृतरसमनुभवद्वारेण जानातीति तज्ज्ञ उच्यते । चिरकालासेवितमपि प्रभूतकालाभ्यस्तमपि न जातु न कदाचिद्बहुमन्यते बहुमानविषयीकरोति पापं मिथ्यादर्शनमोहनीयं तत्कार्यं वा प्रवचनोपघातादि इह च कुभक्तरसकल्पं पापमिथ्यात्वादि । अमृतरसास्वादकल्पो भावः सम्यक्त्वादिरवसेय इति ॥ १५ ॥

उ० एवंत्वित्यादि । एवं त्वेवमेवापूर्वकरणादपूर्वपरिणामात् सम्यक्त्वामृतरसज्ञ इह जगति जीवः चिरकालं प्रभूतभवान् यावदासेवितमभ्यस्तमपि न जातु कदाचिद्बहुमन्यते उत्कटेच्छाविषयीकरोति पापं मिथ्यात्वमोहनीयं तत्कार्यं वा प्रवचनोपघातादि । इह कुभक्तरसकल्पं पापं मिथ्यात्वादि । अमृतरसास्वादकल्पो भावः सम्यक्त्वादिरवसेयः ॥ १५ ॥

सम्यक्त्वामृतरसज्ञो जीवः पापं न बहुमन्यत इत्युक्तं । तत्र सम्यग्दृष्टिरपि विरतेरभावात्पापं कुर्वन् दृश्यत एवेत्याशंक्याह ।

**यद्यपि कर्मनियोगात् करोति तत्तदपि भावशून्यमलम्। अत एव धर्मयोगात् क्षिप्रं तत्सिद्धिमाप्नोति ॥१६॥**

य० यद्यपि कथंचित्कर्म्मनियोगात्कर्म्मव्यापारात्करोति विदधाति तत्पापं तद्भावशून्यमलं तदपि क्रियमाणं पापं भाव-

शून्यमिह पापवृत्तिहेतुर्भावः क्लिष्टाध्यवसायस्तेन शून्यमलमत्यर्थं सम्यग्दृष्टिर्हि पापं कुर्व्वाणोपि न भावतो वहु मन्यते। यथेदमेव साध्विति। अत एव पापाबहुमानद्वारेण। धर्म्मयोगाद्धर्म्मोत्साहाद्धर्म्मसंवंधाद्वा क्षिप्रमचिरेण तत्सिद्धिमाप्नोति धर्म्मनिष्पत्तिमवाप्नोति ॥ १६ ॥

उ० अविरतसम्यग्दृष्टेरपि पापक्रिया दृश्यत एवेति कथं न तद्बहुमान इत्यत आह। यद्यपीत्यादि। यद्यपि कर्मणो निकाचितचारित्रमोहस्य नियोगाद्व्यापारात्करोति तत् पापं तदपि तथाप्यलमत्यर्थं भावेन क्लिष्टाध्यवसायेन शून्यं करोति ततः सम्यग्दृष्टेस्तप्तलोहपदन्यासतुल्या पापे प्रवृत्तिरस्वारसिकीति न तद्बहुमान इत्यर्थः। अत एवेदं साध्विति पापाबहुमानादेव धर्मयोगात्तीव्रधर्मोत्साहात् शीघ्रं तस्य धर्मस्य सिद्धिमाप्नोति सम्यग्दृष्टिः ॥ १६ ॥ ३ ॥

॥ इति तृतीयं षोडशकम् ॥

---

अस्य स्वलक्षणमिदं धर्मस्येत्युक्तम् प्राक्तत्रास्यैव धर्म्म(स्व)तत्त्वस्य विस्तरेण लिंगान्याह ॥

**सिद्धस्य चास्य सम्यग्लिंगान्येतानि धर्मतत्त्वस्य। विहितानि तत्त्वविद्भिः सुखाववोधाय भव्यानाम् ॥१॥**

य० सिद्धस्य च निष्पन्नस्य चास्य प्रत्यक्षीकृतस्य सम्यगवैपरीत्येन प्रशस्तानि वा लिंगानि लक्षणान्येतानि वक्ष्यमाणानि धर्म्मतत्त्वस्य धर्म्मस्वरूपस्य विहितानि शास्त्रेऽभिहितानि तत्त्वविद्भिः परमार्थवेदिभिः सुखाववोधाय सुखपरिज्ञानाय येन तानि सुखेनैव वुध्यन्ते। भव्यानां योग्यानां ॥ १ ॥

उ० धर्मस्य स्वलक्षणमुक्तमथास्य विस्तरेण लिंगान्याह । सिद्धस्य चेत्यादि । सिद्धस्य निष्पन्नस्य चास्य धर्मतत्त्वस्य धर्मस्वरूपस्य सम्यगवैपरीत्येन लिंगानि लक्षणानि तत्त्वविद्भिः परमार्थज्ञैर्विहितानि शास्त्रेऽभिहितानि भव्यानां योग्यानां सुखाववोधाय सुखप्रतिपत्तये ॥ १ ॥

तान्येव लिंगानि स्वरूपतो ग्रन्थकारः पठति ॥

**औदार्यं दाक्षिण्यं पापजुगुप्साथ निर्मलो बोधः । लिंगानि धर्मसिद्धेः प्रायेण जनप्रियत्वं च॥ २ ॥**

य० उदारस्य भाव औदार्यं वक्ष्यमाणलक्षणं दक्षिणोनुकूलस्तद्भावो दाक्षिण्यं निर्देक्ष्यमाणस्वरूपं पापजुगुप्सा पापपरिहारोऽथ निर्म्मलो बोधोऽभिधास्यमानस्वरूपः लिंगानि चिह्नानि धर्म्मसिद्धेर्द्धर्म्मनिष्पत्तेः प्रायेण बाहुल्येन जनप्रियत्वं च लोकप्रियत्वं च ॥ २ ॥

उ० तान्येव लिंगानि संख्याविशिष्टान्याह । औदार्यमित्यादि स्पष्टम् ॥ २ ॥

सांप्रतमौदार्यलक्षणमाह ॥

**औदार्यं कार्पण्यत्यागाद्विज्ञेयमाशयमहत्त्वम् । गुरुदीनादिष्वौचित्यवृत्ति कार्यं तदत्यन्तम् ॥ ३ ॥**

य० औदार्यं नाम धर्म्मतत्त्वलिङ्गम् कार्पण्यत्यागात् कृपणभावपरित्यागादतुच्छवृत्त्या विज्ञेयमाशयमहत्त्वमाशयस्याध्यवसायस्य महत्त्वं विपुलत्वं । तदेव विशिष्यते गुरुदीनादिष्वौचित्यवृत्ति गुरुषु गौरवार्हेषु तदधिकारे यथोक्तं "माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्म्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ १ ॥" दीनादिषु चानाधारेषु यदौचित्यवृत्तिः

औचित्येन वृत्तिरस्मिन्नौदार्ये आशयमहत्त्वे वा तदौचित्यवृत्ति,कार्ये कार्यविषये तदौदार्यमाशयमहत्त्वं वा अत्यन्तमतिशयेन औचित्यवृत्तिकारि वा एतद्गुर्व्वादिषु ॥ ३ ॥

उ० औदार्यं लक्षयति । औदार्यमित्यादि । औदार्यं कार्पण्यस्य दानादिपरिणामसंकोचलक्षणस्य त्यागादाशयस्य चित्तस्य महत्त्वं असङ्कुचितदानादिपरिणामशालित्वं विज्ञेयं तदौदार्यमत्यन्तमतिशयेन गुर्वादयो मातृपितृकलाचार्यतज्ज्ञातिवृद्ध-धर्मोपदेष्टारो दीनादयश्च दीनान्धकृपणप्रभृतयस्तेषु यत् कार्यं दानादि तस्मिन् विषये औचित्येन वृत्तिर्यस्य तत्तथा॥ ३ ॥

इदानीं दाक्षिण्यलक्षणमाह ॥

**दाक्षिण्यं परकृत्येष्वपि योगपरः शुभाशयो ज्ञेयः । गांभीर्यधैर्यसचिवो मात्सर्यविघातकृत्परमः ॥ ४ ॥**

य० दाक्षिण्यं पूर्व्वोक्तस्वरूपं परकृत्येष्वपि परकार्येष्वपि योगपर उत्साहपरः शुभाशयः शुभाध्यवसायो ज्ञेयः गांभीर्य-धैर्यसचिवः परैरलब्धमध्यो गंभीरस्तद्भावो गांभीर्यं धैर्यं धीरता स्थिरत्वं ते गांभीर्यधैर्ये सचिवौ सहायावस्येति । मात्सर्य-विघातकृत्परप्रशंसाऽसहिष्णुत्वविघातकृत्परमः प्रधानः शुभाशय इति ॥ ४ ॥

उ० दाक्षिण्यं लक्षयति । दाक्षिण्यमित्यादि । दाक्षिण्यं परेषां कृत्येषु कार्येष्वपि योगपर उत्साहप्रगुणः शुभाशयो ज्ञेयः गांभीर्यं परैरलब्धमध्यत्वं धैर्यं भयहेतूपनिपातेऽपि निर्भयत्वं ते सचिवौ सहायौ यस्य स तथा मात्सर्यं परप्रशंसासहिष्णुत्वं तस्य विघातकृत्परमः प्रधानः ॥ ४ ॥

पापजुगुप्सालक्षणमाह ॥

**पापजुगुप्सा तु तथा सम्यक्परिशुद्धचेतसा सततम् । पापोद्वेगोऽकरणं तदचिन्ता चेत्यनुक्रमतः ॥ ५॥**

य० पापजुगुप्सा तु तथा पापपरिहाररूपा सम्यकपरिशुद्धचेतसा अविपरीतपरिशुद्धमनसा सततमनवरतं पापोद्वेगोऽतीतकृतपापोद्विग्नता अकरणं पापस्य वर्त्तमानकाले तदचिन्ता चेत्यनुक्रमतः तस्मिन्भाविनि पापे अचिन्ताऽ चिंतनमनुक्रमेण आनुपूर्व्या कालत्रयरूपया अथवा पापोद्वेगः पापपरिहारः कायप्रवृत्त्याऽकरणं वाचा तदचिन्ता पापाचिन्ता मनसा सर्व्वापीयं पापजुगुप्सा धर्म्मतत्त्वस्य लिङ्गम् ॥ ५ ॥

उ० पापजुगुप्सालक्षणमाह । पापेत्यादि । पापजुगुप्सा तु तथा तेन प्रकारेण पापनिषेधकमुखकराद्यभिनयविशेषेणाभिव्यज्यमाना सम्यगविपरीतं परिशुद्धं यच्चेतो मनस्तेन सततमनवरतं पापस्यातीतकृतस्योद्वेगो निन्द अकरणं पापस्य वर्तमानकाले तस्मिन् भाविनि पापेऽचिन्ताऽचिन्तनमित्यनुक्रमत आनुपूर्व्या कालत्रयरूपया यद्वा पापोद्वेगः पापपरिहारः कायप्रवृत्त्याऽकरणं वाचा तदचिंता पापाचिंतनं मनसा सर्वापीयं पापजुगुप्सा धर्मतत्त्वस्य लिङ्गम् ॥ ५ ॥

अधुना निर्म्मलबोधलक्षणमाह ॥

**निर्मलबोधोऽप्येवं शुश्रूषाभावसंभवो ज्ञेयः । शमगर्भशास्त्रयोगाच्छ्रुतचिन्ताभावनासारः ॥ ६ ॥**

य० निर्म्मलबोधोऽपि विमलबोधोपि एवमनेन प्रकारेण शुश्रूषाभावसंभवः शुश्रूषायां भावः तत्समुत्थो ज्ञेयो ज्ञातव्यः

मोहो वक्ष्यमाणलक्षण एव। अरुचिरभिलाषाभावो न धर्म्मपथ्ये न धर्म्मपथ्यविषये न च पापा स्वरूपेण पापहेतुर्व्वा क्रोध-कण्डूतिः क्रोध एव कण्डूतिः कण्डूशब्दः कण्ड्वादिषु पठ्यते तस्य क्तिन्नन्तस्य रूपमेतत् ॥ ९ ॥

उ० के ते पापविकारा ये धर्मारोग्ये सति न भवन्तीतिव्यक्त्या निर्दिशति। तन्नास्येत्यादि। तदेवं स्थितेऽस्य धर्मत-त्त्वयुक्तस्य विषयतृष्णा न भवत्युच्चैरत्यर्थं दृष्टिसंमोहो न प्रभवति अरुचिरभिलाषाभावो न धर्मपथ्ये नच पापा स्वरूपेण पापहेतुर्वा क्रोध एव कण्डूतिः शमघर्षणकृतहर्षा ॥ ९ ॥

इदानीं विषयतृष्णाया लक्षणमाह ॥

**गम्यागम्यविभागं त्यक्त्वा सर्वत्र वर्त्तते जन्तुः। विषयेष्ववितृप्तात्मा यतो भृशं विषयतृष्णेयम् ॥१०॥**

य० गम्यागम्ये लोकप्रतीते तयोर्विभाग आसेवनपरिहाररूपस्तं त्यक्त्वा विषयानियमेन व्यवस्थितः। सर्व्वत्र वर्त्तते जन्तुः सामान्येन सर्व्वत्र प्रवर्त्तते जन्तुः प्राणी विषयेषु शब्दस्पर्शरसरूपगन्धेष्ववितृप्तात्मा साभिलाष एव। यतो यस्या विषयतृष्णायाः सकाशाद्भृशमत्यर्थं विषयतृष्णेयमिति। इयं विषयतृष्णोच्यते ॥ १० ॥

उ० तत्र विषयतृष्णां लक्षयति। गम्येत्यादि। गम्यागम्ये लोकप्रतीते तयोर्विभाग आसेवनपरिहाररूपस्तं त्यक्त्वा यतो यस्याः सकाशाद्विषयेषु शब्दस्पर्शरसरूपगंधेषु भृशमत्यर्थमवितृप्तात्माऽप्रशान्ताभिलाष एव सर्वत्र जन्तुः वर्त्तते प्रवर्त्तते इयं विषयतृष्णोच्यते ॥ १० ॥

इदानीं दृष्टिसंमोहस्य लक्षणमाह ॥

**गुणतस्तुल्ये तत्वे संज्ञाभेदागमान्यथादृष्टिः । भवति यतोऽसावधमो दोषः खलु दृष्टिसंमोहः ॥ ११ ॥**

य० गुण उपकारफलं तदाश्रित्य तुल्ये समाने द्वयोर्व्वस्तुनोस्तद्भावस्तत्त्वं तस्मिँस्तुल्ये सति। संज्ञाभेदागमान्यथादृष्टिः आगमे न आगमविषये अन्यथा विपरीता दृष्टिर्मतिरस्येत्यागमान्यथादृष्टिर्बहुव्रीहिसमासः संज्ञाभेदेन नामभेदेनागमान्यथादृष्टिरिति पुरुषः परिगृह्यते, भवति जायते, यतो यस्माद्दोषादसौ दोषोऽधमो निकृष्टः, खलुशब्दोऽवधारणेऽधम एव दोषो दृष्टिसंमोहाभिधानः। इदमत्र हृदयं। निदर्शनमात्रेण द्वयोरारंभयोर्भोगोपभोगलक्षणं फलमाश्रित्य तुल्यमेव तत्त्वं। तत्रैकस्मिन्नारंभे प्रवृत्तः पुरुषस्तत्फलोपयोगी तमारंभं सावद्यं मन्यतेऽपरस्तु तत्समान एव प्रवृत्तस्तमारंभं निर्द्दोषं मन्यते। तत्फलं च स्वयमेवोपभुंक्ते यतो दोषात्स दृष्टिसंमोह इति। अथवा गुणः परिणामो भावोऽध्यवसायविशेषस्तदङ्गीकरणेन तुल्ये तत्त्वे संज्ञाभेदागमान्यथादृष्टिः पुरुषो यतो दोषात्प्रवर्त्तते। स दृष्टिसंमोहो नाम दोषो भवति। यत्र तु गुणतो भावाख्याद्गुणान्न तुल्यं तत्त्वं स्वरूपं द्वयोरारंभात्मनोर्व्यक्तिभेदेन वस्तुनोस्तत्र चैत्यायतनादिविषये क्षेत्रहिरण्यग्रामादौ शास्त्रीयाऽध्यवसायभेदेन प्रवृत्तत्वात्स्वयं च तत्फलस्यानुपभोगात्केवलमागमानुसारितया तत्रोपेक्षापरित्यागेन ग्रामक्षेत्राद्यारंभमपरिहरतोऽपि न दृष्टिसंमोहाख्यो दोषस्तत्त्वतस्तस्यारंभपरिवर्ज्जनात्। दर्शनमागमो जिनमतं तत्र संमोहः संमूढता अन्यथोक्तस्यान्यथाप्रतिपत्तिर्दर्शनसंमोहः। नचैवंविधस्यागमिकस्य दोषः संभवतीति। तथाचागमः। चोएइ चेइयाणं खेत्तहिरण्णाई गामगावाई। लग्गंतस्स उ जइणो तिकरणसोही कहं णु भवे ॥१॥ अयं च स चोद्यः परिहा-

रोऽवसेयो । यदि वाऽहिंसाप्रशमादीनां तंत्रान्तरेष्वपि तुल्ये तत्त्वे परिभाषाभेदमात्रेणागमेष्वन्यथादृष्टिः पुरुषो यतो भवति स दृष्टिसंमोह इति ॥ ११ ॥

उ० दृष्टिसंमोहं लक्षयति । गुणत इत्यादि । गुण उपकारफलं तदाश्रित्य तुल्ये समाने तत्त्वे द्वयोर्वस्तुनोः स्वरूपे संज्ञाभेदस्य नामभेदस्यागमोऽवतारो यस्यां सा तथाऽन्यथा विपरीता दृष्टिर्मतिर्यतो दोषादसौ दोषोऽधमः खल्वधम एव दृष्टिसंमोहो दृष्टेर्मतेः सं सामस्त्येन मोह इति कृत्वा । तथा द्वयोरारंभयोर्भोगोपभोगलक्षणं तुल्यफलमाश्रित्य प्रवृत्त एकस्तत्फलोपभोगी तमारंभं सावद्यं मन्यतेऽपरस्तु प्रवृत्तिनाम्ना निरवद्यं तत्रापरस्य दृष्टिसंमोहः । यद्वा । गुणो भावाख्यस्तमाश्रित्य तुल्ये तत्त्वे आरंभद्वयादिगते आगमे शास्त्रेऽन्यथादृष्टिर्यस्येति वहुव्रीहिस्ततः संज्ञाभेदेनागमान्यथादृष्टिरिति तत्पुरुष एतादृशः पुरुषो यतो दोषाद्भवति स दृष्टिसंमोहः। यथा यादृच्छिक्यां यागीयायां च हिंसायां स्वोपभोगमात्रफलभूतिकामनालक्षणक्लिष्टभावाविशेषेपि तद्विशेषाश्रयणं वैदिकानां दृष्टिसंमोहः । यत्र तु गुणतो भावाख्यान्न तुल्यं तत्त्वं द्वयोरारंभात्मनोर्व्यक्तिभेदेन वस्तुनोस्तत्र चैत्यायतनादिविषय(ये)क्षेत्रहिरण्यग्रामादौ शास्त्रीयाध्यवसायभेदेन प्रवृत्तत्वात् स्वयं च तत्फलस्यानुपभोगात्केवलमागमानुसारितया तत्रोपेक्षापरित्यागेन ग्रामक्षेत्राद्यारंभमपरिहरतोऽपि स्वपरयोर्भावापद्विनिवारणाध्यवसायप्रवृद्ध्या न दृष्टिसंमोहाख्यो दोषो दर्शनमागमः तत्र संमोहः संमूढतेत्यर्थाभावात्तत्त्वतः तस्यारंभपरिवर्जकत्वेनासंमूढत्वात् यद्वा गुणतः शब्दार्थतस्तुल्ये तत्त्वे हिंसादीनां संज्ञाभेदेनाकारणनियममहाव्रतादिस्वपरिभाषाभेदेनागमेषु पातंजलजैनादिशास्त्रेष्वन्यथादृष्टिः पुरुषो यतो भवति स दृष्टिसंमोहः महाव्रतादिप्रतिपादको मदीयागमः समीचीनोऽकरण-

नियमादिप्रतिपादकोऽन्यागमो न समीचीन इत्यस्य चाग्रहत्वात्सर्वस्यापि सद्वचनस्य परसमयेऽपि स्वसमयानन्यत्वादुक्तं-चोपदेशपदे "सव्वप्पवायमूलं दुवालसंगं जउ जिणक्खायं । रयणागरतुल्लं खलु तो सव्वं सुन्दरं तम्मीत्यन्यत्र विस्तरः ॥११॥

एवं दृष्टिसंमोहमभिधाय तदनन्तरं धर्म्मपथ्यविषयायाः अरुचेर्लिङ्गमाह ॥

**धर्मश्रवणेऽवज्ञा तत्त्वरसास्वादविमुखता चैव । धार्मिकसत्त्वासक्तिश्च धर्मपथ्येऽरुचेर्लिङ्गम् ॥ १२ ॥**

य० धर्म्मस्य श्रवणमविपरीतार्थमाकर्णनं तत्रावज्ञाऽनादरस्तत्त्वे परमार्थे रस आसक्तिहेतुः तस्यास्वादः तस्मिन्विमुखता वैमुख्यं तत्त्वरसास्वादविमुखता चैव धार्म्मिका ये सत्त्वास्तैरसक्तिरसंयोगोऽसंपर्को धार्म्मिकसत्त्वात्सक्तिश्च । धर्म्मपथ्ये धर्म्मः पथ्यमिव तस्मिन्नरुचेर्लिङ्गमिति प्रत्येकमभिसंबंधः करणीयः ॥ १२ ॥

उ० धर्मपथ्यारुचिं लिङ्गद्वारा लक्षयति । धर्मेत्यादि । धर्मस्य श्रवणमविपरीतार्थमाकर्णनं तत्रावज्ञानादरस्तत्त्वे परमार्थे वा रसस्तस्यास्वादोऽनुभवस्तस्मिन् विमुखता चैव धार्मिका ये सत्त्वाः प्राणिनस्तैः सहासक्तिरसंयोगश्च धर्म एव पथ्यं पापव्याध्यपनायकत्वात्तत्रारुचेर्लिङ्गं भवेदिति प्रत्येकमभिसंबंधनीयम् ॥ १२ ॥

नच पापा क्रोधकण्डूतिरित्युक्तं तस्याश्चिह्नमाह ॥

**सत्येतरदोषश्रुतिभावादन्तर्बहिश्च यत्स्फुरणम् । अविचार्य कार्यतत्त्वं तच्चिह्नं क्रोधकण्डूतेः ॥ १३ ॥**

य० सत्यदोपश्रुतिभावादसत्यदोषश्रुतिभावाच्चान्तर्ब्बहिश्चाभ्यन्तरपरिणाममाश्रित्यान्तर्ब्बहिर्गताऽप्रसन्नताद्याकारद्वारेण बहिश्च यत्स्फुरणं वा वृद्धिश्चलनं वा अविचार्यानालोच्य कार्यतत्त्वं कार्यपरमार्थं तच्चिह्नं लक्षणं क्रोधकण्डूतेः क्रोधकण्ड्वाः ॥१३॥

उ० अथ क्रोधकण्डूतिं चिह्नद्वारा लक्षयति । सत्येत्यादि । सत्येतरदोषाणां यथास्थितासद्भूतापराधानां श्रुतिभावादन्तःप्रज्वलनद्वारा बहिश्चाप्रसन्नताव्यञ्जकाकारद्वारा यत्स्फुरणं वृद्धिश्चलनं वाऽविचार्यानालोच्य कार्यतत्त्वं स्वात्मनोऽत्यन्ताहितं दुर्गतिविपाकलक्षणं क्रोधकार्यपरिणामं तच्चिह्नं लक्षणं क्रोधकण्डूतेः क्रोधकण्ड्वाः ॥ १३ ॥

एवमेते विषयतृष्णादयो व्यतिरेकमुखेनोक्तास्तद्भावमुपदर्शयन्मैत्र्यादिगुणसंभवमाह ॥

**एते पापविकारा न प्रभवंत्यस्य धीमतः सततं । धर्मामृतप्रभावाद्भवंति मैत्र्यादयश्च गुणाः ॥ १४ ॥**

य० एते पापविकाराः पूर्व्वोक्ता न प्रभवंति न जायंतेऽस्य पुरुषस्य धीमतो बुद्धिमतः सततमनवरतं । धर्म्मामृतप्रभावाद्धर्म एवामृतं तत्प्रभावाद्भवंति संपद्यंते मैत्र्यादयश्च गुणा वक्ष्यमाणस्वरूपाः ॥ १४ ॥

उ० निगमयति । एत इत्यादि । एते विषयतृष्णादयः पूर्वोक्ताः पापविकारा न प्रभवन्ति न जायन्तेऽस्य पुरुषस्य धीमतो बुद्धिमतः सततमनवरतं धर्ममेव यदमृतं पापविषनाशकत्वात्तस्य प्रभावात्तथा चैतानि दोषाभावरूपाणि धर्मतत्त्वलिङ्गान्युक्तानि । अथाभ्यासिकगुणरूपाणि तल्लिंगान्याह । मैत्र्यादयश्च गुणा वक्ष्यमाणस्वरूपा धर्मामृतप्रभावादेव संपद्यंते ॥१४॥

मैत्र्यादीनामेव लक्षणमाह ॥

**परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥१५॥**

य० परेषां प्राणिनां हितचिन्ता हिताचिंतनम् मैत्री, ज्ञेयेति सर्वत्र वाक्यशेषः । परेषां दुःखं तद्विनाशिनी तथा करुणा

कृपा, परेषां सुखं तेन तस्मिन् वा तुष्टिः परितोषोऽप्रीतिपरिहारो मुदिता, परेषां दोषा अविनयादयः प्रतिकर्त्तुमशक्यास्तेषामुपेक्षणमवधीरणमुपेक्षा, संभवत्प्रतीकारेषु दोषेषु नोपेक्षा विधेया ॥ १५ ॥

उ० मैत्र्यादिलक्षणमाह । परेत्यादि । परेषां प्राणिनां हितचिन्ता मैत्री ज्ञेया । परेषां यद्दुःखं तद्विनाशिनी परिणतिः करुणा । परेषां यत्सुखं तेन तस्मिन् वा तुष्टिरप्रीतिपरिहारो मुदिता । परेषां दोषा अविनयादयोऽप्रतीकार्यास्तेषामुपेक्षणमवधीरणमुपेक्षा संभवत्प्रतीकारेषु तु दोषेषु सापेक्षयतिना नोपेक्षा विधेया ॥ १५ ॥

एवं मैत्र्यादिगुणान्भावनारूपानभिधाय धर्म्मतत्त्वलक्षणोपसंहारं चिकीर्षुराह ॥

**एतज्जिनप्रणीतं लिङ्गं खलु धर्मसिद्धिमज्जन्तोः । पुण्यादिसिद्धिसिद्धेः सिद्धं सद्धेतुभावेन ॥ १६ ॥ ४ ॥**

य० एतत्पूर्वोक्तं सर्व्वमेवौदार्यादिविधिप्रतिषेधविषयं जिनप्रणीतं जिनोक्तं लिङ्गं लक्षणं खलुशब्दो वाक्यालङ्कारे धर्म्मसिद्धिमत् धर्म्मनिष्पत्तिमत् जन्तोः प्राणिनः पुण्यादिसिद्धिसिद्धेः पुण्याद्युपायनिष्पत्तेः सिद्धं प्रतिष्ठितं सद्धेतुभावेन सत्कारणत्वेनावन्ध्यहेतुत्वेनेति यावत् । पुण्योपायाश्च चत्वारो यथोक्तं "दया भूतेषु वैराग्यं विधिदानं यथोचितम् । विशुद्धा शीलवृत्तिश्च पुण्योपायाः प्रकीर्त्तिताः ॥१॥" आदिग्रहणात् ज्ञानयोगोपायपरिनिष्पत्तेश्च सद्धेतुत्त्वेन सिद्धमेतल्लिङ्गमिति ॥१६॥४॥

उ० उपसंहरन्नाह । एत इत्यादि । एतत् पूर्वोक्तमौदार्यादि सर्वमेव जिनप्रणीतं जिनोक्तं लिङ्गं लक्षणं खलुशब्दो वाक्यालङ्कारे जन्तोः प्राणिनो धर्मसिद्धिमद्व्यञ्जकतासंबन्धेन धर्मनिष्पत्तिमत्पुण्यस्यादय उपायाः "दया भूतेषु वैराग्यं विधि-

दानं यथोचितम् । विशुद्धा शीलवृत्तिश्च पुण्योपायाः प्रकीर्त्तिता" इति श्लोकोक्ताश्चत्वारः त एव सिद्धयः परमैश्वर्यरूपत्वात्तासां सिद्धेर्निष्पत्तेः सद्धेतुभावेनाऽवंध्यहेतुत्त्वेन रिद्धं पुण्यादीत्यादिना ज्ञानयोगग्रहोऽग्रिमसिद्धिशब्दश्चोपायार्थ इत्यन्ये ॥ १६ ॥ ४ ॥

## ॥ इति चतुर्थं षोडशकम् ॥

एवं तावत्सामान्येन व्यवस्थितस्य धर्म्मतत्त्वस्य लिङ्गं सप्रपञ्चमभिधायाधुना लोकोत्तरतत्त्वसंप्राप्तिमाह ॥

**एवं सिद्धे धर्मे सामान्येनेह लिङ्गसंयुक्ते । नियमेन भवति पुंसां लोकोत्तरतत्त्वसंप्राप्तिः ॥ १ ॥**

य० एवं सिद्धे धर्म्मे पूर्व्वोक्तनीत्या सामान्येन लोकलोकोत्तराप्रविभागेनेह प्रक्रमे लिङ्गसंयुक्ते प्रतिपादितनीत्या नियमेन नियोगेन भवति जायते पुंसां पुरुषाणां लोकोत्तरस्य लोकोत्तमस्य तत्त्वस्य परमार्थस्य संप्राप्तिर्लाभ इति ॥ १ ॥

उ० एवं सामान्येन सलिङ्गधर्मसिद्धिमुक्त्वा ततो यत्स्यात्तदाह । एवमित्यादि । एवं प्रागुक्तनीत्या सामान्येन लोकलोकोत्तराप्रविभागेनेहप्रक्रमे लिङ्गसंयुक्ते धर्मे सिद्धे नियमेन निश्चयेन भवति । पुंसां तत्तत्तन्त्रोक्तमुमुक्षुजनयोग्याचारप्रणेतृनानावस्थापुनर्बन्धकापेक्षया शुद्धानां स्वतन्त्रव्यवहारस्थापुनर्बन्धकानां सम्यग्दृशां च सर्वेषामेव लोकोत्तरस्य लोकानवगतेतिकर्त्तव्यताकस्य तत्त्वस्य परमार्थस्य संप्राप्तिः ॥ १ ॥

इयं च लोकोत्तरतत्त्वसंप्राप्तिर्यद्रूपा यस्मिंश्च काले संभवति तदेतदभिधातुमाह ॥

**आद्यं भावारोग्यं बीजं चैषा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्त्ते ॥ २ ॥**

य० आदौ भवमाद्यं भावारोग्यं भावरूपमारोग्यं तच्चेह सम्यक्त्वं तद्रूपत्वाल्लोकोत्तरतत्त्वसंप्राप्तेःबीजं चैषा लोकोत्तरतत्त्वसंप्राप्तिः परस्य प्रधानस्य तस्यैव भावारोग्यस्य मोक्षलक्षणस्य रागद्वेषमोहानां तन्निमित्तानां च जातिजरामरणादीनां भावरोगरूपत्वात्तदभावरूपत्वाच्च निःश्रेयसस्य । अधिकारिणः क्षीणप्रायसंसारस्य नियोगान्नियमेन चरमे पर्यन्तभववर्त्तिनि इयं प्रस्तुता पुद्गलावर्त्ते पुद्गलपरावर्त्ते समयप्रसिद्धे औदारिकवैक्रियतैजसकार्म्मणप्राणापानभाषामनोभिरेतत्परिणामपरिणतसर्व्वपुद्गलग्रहणरूपे ॥ २ ॥

उ० इयं च यद्रूपा यस्मिंश्च काले स्यात्तदेतदभिधातुमाह । आद्यमित्यादि । आदौ भवमाद्यं भावरूपमारोग्यमेषा सम्यक्त्वस्पर्शाद्बीजं च परस्य प्रधानस्यैतस्यैव भावारोग्यस्य मोक्षरूपस्य तस्य रागादिभावरोगाभावतः पापाप्रसिद्धेः इयमधिकारिणः क्षीणप्रायसंसारस्य नियोगान्नियमाच्चरमे पुद्गलपरावर्त्ते औदारिकवैक्रियतैजसकार्मणप्राणापानभाषामनोभिरेतत्परिणामपरिणतसर्वपुद्गलग्रहणरूपे भवति अभ्युच्चयपक्षोऽयं यावता सार्वतंत्रिक्यप्यपुनर्बन्धकक्रियाऽन्यपुद्गलपरावर्त्ते न भवति"मोक्खासओ वि न तच्छ हो"ईत्यादिना मोक्षाशयस्यापि तत्र प्रतिषेधादित्यन्यत्र विस्तरो द्रष्टव्यः ॥ २ ॥

कुतः पुनर्हेतोश्चरमपुद्गलावर्त्तो भवतीत्याशंकायामिदमाह ॥

**स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि । ज्वरशमनौषधसमयवदिति समयविदो विदुर्निपुणम् ३**

य० स चरमपुद्गलावर्त्तो भवति स्वरूपतः कालादेव प्राधान्येन हेतुविवक्षायां कालप्राधान्यमाश्रित्य । शेषकर्म्मादिहेत्वन्तरोपसर्ज्जनीभावप्रतिपादनेन सुकृतादिभावेऽपि सुकृतदुष्कृतकर्म्मपुरुषकारनियत्यादिभावेऽपि । कर्म्मादिभावेऽ-

पीति पाठान्तरं नाश्रितं छन्दोभङ्गभयात् । निदर्शनमाह ज्वरशमनौपधसमयवत् ज्वरं शमयतीति ज्वरशमनं तच्च तदौषधं च तस्य समयः प्रस्तावो देशकालस्तद्वद्भवति चरमः । ज्वरशमनीयमप्यौषधं प्रथमापाते दीयमानं न कंचन गुणं पुष्णाति प्रत्युत दोपानुदीरयति तदेव चावसरे जीर्णज्वरादौ वितीर्यमाणं स्वकार्यं निर्व्वर्त्तयति । एवमयमप्यवसरकल्पो वर्त्तते चरम इति भावः । इत्येवं समयविदः सिद्धान्तज्ञा विदुर्जानन्ति क्रियाविशेषणं निपुणमिति ॥ ३ ॥

उ० कुतः पुनर्हेतोश्चरमपुद्गलपरावर्त्तो भवतीत्याह । स इत्यादि । स चरमपुद्गलपरावर्त्तः कालादेव प्राधान्येनेतरहेत्वपेक्षाविलंबाभावरूपेण भवति सुकृतादीनां भावेपि सामग्र्यां प्रवेशेपि सुकृतपदं प्रकृता ( पुण्यप्रकृत्य ) भिप्रायेणान्यथा कर्म सामान्यमात्रं ग्राह्यं आदिना पुरुपकारनियत्यादिग्रहः । निदर्शनमाह ज्वरस्य शमनं यदौपधं तत्समयवत् । यथाहि ज्वरशमनौपधमपि प्रथमापाते दत्तं न गुणकृत् प्रत्युत दोपोदीरकं ज्वरजीर्णतासमये च दत्तं तद्गुणकृत्स च परिपाकाख्यपर्यायशालिकालेनैव जन्यते तथा सद्धर्मौपधमप्यचरमावर्त्ते दत्तं न गुणकृत्प्रत्युत दोपोदीरकमेव चरमे तु दत्तं गुणकृत्स च भावपरिपाकाख्यपर्याययुक्तकालादेव भवतीति समयविदः सिद्धान्तज्ञा निपुणं यथा स्यात्तथा विदुः ॥ ३ ॥

कस्मात्पुनः चरमपुद्गलावर्त्तः प्राधान्येन लोकोत्तरतत्त्वसंप्राप्तेर्हेतुराश्रीयत इत्याह ॥

**नागमवचनं तदधः सम्यक्परिणमति नियम एपोऽत्र । शमनीयमिवाभिनवे ज्वरोदयेऽकाल इति कृत्वा ।४।**

य० नेति प्रतिपेधे आगमवचनमार्पवचनं तदधस्तस्याधस्तात् पुद्गलपरावर्त्तादभ्यधिकसंसारस्य सम्यग्विपयविभागेन परिणमति न परिणमत्येवेत्यर्थः नियम एप प्रस्तुतोऽत्र प्रक्रमे शमनीयमिवौपधमभिनवे ज्वरोदये प्रत्यग्रे ज्वरप्रादुर्भावे किमित्यकाल इति कृत्वाऽप्रस्ताव इति कृत्वा ॥ ४ ॥

उ० उक्तमेव निदर्शनार्थं स्पष्टमाह नेत्यादि आगमवचनं तदधश्चरमपरावर्ताधिकसंसारे न सम्यग् विपथनिपथिविभागेन परिणमति नियम एष प्रस्तुतोऽत्र प्रक्रमे शमनीयमिवौषधमिनाभिनवज्वरोदयेऽकालोऽप्रस्ताव इतिकृत्वा ॥ ४ ॥

नागमवचनं तस्याधस्तात्परिणमतीत्युक्तं तदेव दर्शयति ॥

आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा। पश्यन्त्यपवादात्मकमविषय इह मन्दधीनयनाः ॥५॥

य० आगमप्रदीपे अध्यारोपमण्डलं भ्रान्तिमण्डलं अध्यारोपो भ्रांतिस्तया मण्डलं मण्डलाकारं दीपे अपरे तु भ्रान्तिसमूहं, तत्त्वतः परमार्थेन, वस्तुवृत्त्या असदेवाविद्यमानमेव, तथा तेनरूपेण तैमिरिकं दृश्येनप्रदीपस्योपवर्तितया पश्यन्ति दृष्टिदोषात् अपवादात्मकमपवादस्वरूपमविषये योऽपवादस्य कथंचिन्न विषयस्तस्मिन्नविद्यमानमेव पश्यति इह लोके मन्दधीनयनाः मन्दबुद्धिचक्षुपः यथोक्तं "मयूरचंद्रकाकारं नीललोहितभासुरम् । प्रपश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुपः ॥ ५ ॥

उ० न केवलं तदधस्तादागमवचनं न परिणमति किन्तु विपरीतं परिणमतीत्याह। आगमेत्यादि । आगमदीपे सिद्धान्तसद्धादप्रदीपेऽध्यारोप आरोपितरूपमेव मंडलं "मयूरचंद्रकाकारं नीललोहितभासुरम् । प्रपश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुप" इत्युक्तरूपमविषयेऽपवादास्थानेऽपकृष्टत्वादात्मकमिह लोके मन्दधीनयना मन्दबुद्धिचक्षुपस्तत्त्वतो वस्तुवृत्त्याऽसदेवाविद्यमानमेव तथा तैमिरिकंदृश्येन तेन प्रकारेण पश्यन्ति दृष्टिदोषात् ॥ ५ ॥

यत एवागमदीपेऽध्यारोपमण्डलं तत्त्वतः(तोऽ) सदेव पश्यन्ति ॥

तत एवाविधिसेवादानादौ तत्परिज्ञफल एव । तत्त्वदृशामेषा पापा कथमन्यथा भवति ॥ ६ ॥

य० तत एवाध्यारोपादेव भ्रान्तेरेवेत्यर्थः । अध्यारोपमण्डलदर्शनादेव वा अविधिसेवा अविधेर्विधिविपर्ययस्य सेवा सेवनं दानादौ विषये । आदिशब्दाच्छीलतपोभावनापरिग्रहः । तत्प्रसिद्धफल एव तस्मिन्नागमे प्रसिद्धं फलं यस्य दानादेस्तस्मिन् । तस्यागमस्य तत्त्वं परमार्थस्तं पश्यन्तीति तत्तत्त्वदृशस्तेषामेषाऽविधिसेवा पापा स्वरूपेण कथमन्यथा भवति न भवतीत्यर्थः ॥ ६ ॥

उ० उक्तमेवार्थं कार्यलिङ्गेन समर्थयति । तत एवेत्यादि । तत एवागमदीपेऽध्यारोपमण्डलदर्शनादेवाविधेर्विधिविपर्ययस्य सेवा दानादौ विषये तत्प्रसिद्धफल एवागमाभ्युपगतफल एव भवत्यन्यथागमार्थाध्यारोपाभावे तत्तत्त्वदृशामागमप्रामाण्याभ्युपगन्तॄणामेषा दानाद्यविधिसेवा पापा पापहेतुः कथं स्यात्फलार्थिनः फलानुपाये प्रवृत्तेरर्थभ्रमं विनाऽसंभवादिति भावः ॥ ६ ॥

अविधिसेवागतमेवाह ॥

**येषामेषा तेषामागमवचनं न परिणतं सम्यक् । अमृतरसास्वादज्ञः को नाम विषे प्रवर्त्तेत ॥ ७ ॥**

य० येषां जीवानामेषाऽविधिसेवा तेषामागमवचनं सर्वज्ञवचनं न परिणतं सम्यग् ज्ञेयविषयविभागेन चेतसि न व्यवस्थितं आगमवचनापरिणतौ कारणमाह अमृतरसास्वादज्ञः पुमान् को नाम न कश्चिद्विषे मारणात्मके प्रवर्त्तेत भक्षयितुं प्रवृत्तिं विदधीत विषप्रवृत्तिकल्पाऽविधिसेवा ततो विज्ञायते नागमवचनं सम्यक्परिणतमिति ॥ ७ ॥

उ० ज्ञानफलाभावलक्षणापरिणामस्याप्यविधिसेवा लिङ्गमित्याह येषामित्यादि । येषां जीवानामेषाविधिसेवा तेषामा-

गमवचनं न सम्यक् फलोपधानेन परिणतं को नामामृतरसास्वादज्ञः पुमान् विषे प्रवर्तेत भक्षणप्रवृत्तिं विदध्याद्विपप्रवृत्तिकल्पामविधिसेवां तत्त्वतो नागमवचनं फलतः परिणतमितिभावः ॥ ७ ॥

प्रतिषेधमुखेनोक्तमर्थं विधिमुखेन नानागमवचनपरिणामाश्रयमाह ॥

**तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते। परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥८॥**

य० तस्माच्चरमेऽवसानवृत्तौ नियमान्नियमेनागमवचनं पूर्वोक्तमिह पुद्गलावर्त्ते प्रागुक्ते परिणमति उत्तरोत्तरपरिणामविशेषमासादयति, स्वरूपेण परिस्फुरतीत्यर्थः। तत्त्वतः खलु तत्त्वत एव यस्यैतदागमवचनं परिणमति स चाधिकारी अधिकारवान् भवत्यस्या लोकोत्तरतत्त्वसंप्राप्तेः शेषस्त्वनधिकारीति ॥ ८ ॥

उ० विधिमुखेनोक्तं निषेधमुखेनाह । तस्मादित्यादि । तस्माच्चरमे पुद्गलावर्ते नियमेनेह जगति आगमवचनं तत्त्वतः खलु परमार्थत एव परिणमत्युत्तरोत्तरफलमुपदधाति सच परिणतागमवचनोऽस्या लोकोत्तरतत्त्वसंप्राप्तेरधिकारी भवति न शेषः॥८॥

किमित्यागमवचनपरिणामः प्रशस्यत इत्याह ॥

**आगमवचनपरिणतिर्भवरोगसदौषधं यदनपायं। तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥**[1]

य० आगमवचनपरिणतिर्यथावत्तत्प्रकाशरूपा भवरोगसदौषधं भवरोगस्य संसारामयस्य सदौषधं तदुच्छेदकारित्वेन यद्यस्मात्, अन(निर)पायमपायरहितं निर्दोषं वर्त्तते तदिह परः सद्बोधस्तच्च भवरोगसदौषधमागमवचनपरिणत्याख्यं, परः

---

१ आगमवचनपरिणतिर्भवरोगसदौषध भवति यस्मात् । निरपाय तदिह पर सदनुष्ठानस्य हेतुरिति ॥ ९ ॥ इति पाठान्तरम् ॥

प्रधानः सद्बोधः सम्यग्ज्ञानं वर्त्तते सदनुष्ठानस्य सुन्दरानुष्ठानस्य हेतुः कारणमितिकृत्वा ॥ ९ ॥

उ० किमित्येवमागमवचनपरिणामोऽधिक्रियत इत्यत आह । आगमेत्यादि । आगमवचनस्य परिणतिरज्ञानावरणह्रासोत्थोपादेयत्वाद्यविषयबालादिज्ञानतुल्यविषयप्रतिभासोत्तीर्णज्ञानावरणह्रासोत्थोपादेयत्वादिविषयात्मपरिणामवद्ज्ञानरूपा भवरोगस्य सदौषधं तदुच्छेदकत्वेन यद् यस्मादनपायं निर्दोषं प्रतिबन्धेऽपि श्रद्धादिभावात् तत्तस्मादिहागमवचनपरिणत्यां सत्यां परः प्रकृष्टः सज्ज्ञानावरणह्रासोत्थत्वाच्छुद्धोपादेयत्वादिविषयत्वाच्च सद्बोधस्तत्त्वसंवेदननामा प्रकाशः, सदनुष्ठानस्य विरतिरूपस्य हेतुः फलोपहितकारणमितिकृत्वागमवचनपरिणामोऽधिक्रियते ॥ ९ ॥

कथं पुनः सद्बोधादनुष्ठानं परिपूर्णं भवतीत्याह ॥

**दशसंज्ञाविष्कंभणयोगे सत्यविकलं ह्यदो भवति । परहितनिरतस्य सदा गंभीरोदारभावस्य ॥ १० ॥**

य० दश च ताः संज्ञाश्च तासां विष्कंभणं यथाशक्तिनिरोधस्तद्योगे तत्संबन्धे सति तन्निरोधोत्साहे वा, अविकलं ह्यखण्डं, अद एतत्सदनुष्ठानं भवति परहितनिरतस्य परोपकाराभिरतस्य, सदा सर्व्वकालं, गंभीरोदारभावस्य गांभीर्य्यौदार्ययुक्तमनसः ॥ १० ॥

उ० कः पुनः सद्बोधपूर्वानुष्ठानस्य विशेष इत्याह । दशेत्यादि । दशानां संज्ञानां विष्कंभणं यथाशक्तिनिरोधस्तद्योगे तन्निरोधोत्साहे वा हि यतोऽदः प्रकृतानुष्ठानं भवत्यतोऽविकलं संपूर्णं भवति तद्वैकल्यापादकसंज्ञाविष्कंभणात् परहिते निरतस्य तथा सदा सर्व्वकालं गंभीर उदारश्च भावो यस्य स तथा तस्यात इदमविकलत्वाद्विशिष्यत इति भावः ॥ १० ॥

कथं पुनरिदं दशसंज्ञाविष्कंभणादि दुर्लभमपि भवतीत्याह ॥

**सर्व्वज्ञवचनमागमवचनं यत्परिणते ततस्तस्मिन् । नासुलभमिदं सर्वं ह्युभयमलपरिक्षयात्पुंसाम् ॥ ११ ॥**

य० सर्व्वज्ञवचनमागमवचनं यद्यस्मात्परिणते ततस्तस्मिन्नागमवचने नासुलभमिदं न दुर्लभमिदं किंतु सुलभमेव भवति सर्व्वं हि पूर्वोक्तमुभयमलपरिक्षयात् क्रियामलभावमलपरिक्षयात्पुंसां पुरुषाणाम् ॥ ११ ॥

उ० दशसंज्ञाविष्कंभणमपि दुर्लभं कथं स्यादित्याह । सर्वज्ञेत्यादि । यद् यस्मादागमवचनं सर्वज्ञवचनं, ततस्तस्मिन् परिणते विधिरत्यद्ध्यात्म(रूपाध्या)योगेनोभयमलपरिक्षयात् क्रियामलभावमलोच्छेदात्पुंसां पुरुषाणामिदं सर्व्वं दशसंज्ञाविष्कंभणं हि निश्चितं नासुलभं किन्तु सुलभमेव ॥ ११ ॥

अध्यारोपादविधिसेवा दानादावित्युक्तं तद्विपर्ययेणाह ॥

**विधिसेवा दानादौ सूत्रानुगता तु सा नियोगेन । गुरुपारतन्त्र्ययोगादौचित्याच्चैव सर्व्वत्र ॥ १२ ॥**

य० विधिसेवा आगमाभिमतन्यायसेवा, दानादौ विषये, ज्ञेया सूत्रानुगता त्वागमानुगता तु सा विधिसेवा, नियोगेन नियमेन, गुरुपारतन्त्र्ययोगाद्गुरुपरतन्त्रसंवन्धात्, औचित्याच्चैवानौचित्यपरिहारेण सर्व्वत्र दीनादावविशेषेण ॥ १२ ॥

उ० अध्यारोपादविधिसेवा दानादावित्युक्तं तदभावे यत् स्यात्तदाह । विधिसेवेत्यादि । विधिसेवा सर्वाङ्गपरिशुद्धप्रवृत्तिर्दानादौ सूत्रानुगता त्वभ्रान्तसूत्रज्ञानानुसारिण्येव स्यात् सा विधिसेवा, नियोगेन नियमेन, गुरुपारतन्त्र्यस्य योगाद्भवेन्न तु यादृच्छिकज्ञानमात्रादौचित्याच्चैवानौचित्यपरिहारेण च सर्वत्र दीनादौ ॥ १२ ॥

विधिसेवा दानादावित्युक्तं तत्र महादानदानयोर्विशेषाभिधित्सयेदमाह ॥

**न्यायात्तं स्वल्पमपि हि भृत्यानुपरोधतो महादानम्। दीनतपस्व्यादौ गुर्वनुज्ञया दानमन्यत्तु ॥ १३ ॥**

य० न्यायात्तं ब्राह्मणक्षत्रियविट्शूद्राणां स्वजातिविहितन्यायोपात्तं, स्वल्पमपि हि स्तोकमपि हि, भृत्यानुपरोधतो भृत्यानुपरोधेन पोष्यवर्गाविघातेन, महादानं विशिष्टदानं, दीनतपस्व्यादौ विषये, गुर्व्वनुज्ञया पित्रादिकुलपुरुषानुज्ञया, यदेवं विशेषणं तन्महादानं। दानमन्यत्तु न्यायानुपात्तभृत्योपरोधादिना विपर्ययेण दीयमानमन्यत्पुनर्दानमेव भवति ॥ १३ ॥

उ० दानादिविधिसेवायां महादानदानयोर्विशेषमाह। न्यायात्तमित्यादि। न्यायेन ब्राह्मणक्षत्रियविट्शूद्राणां स्वजातिविहितव्यापारेणात्तं स्वीकृतं स्वल्पमपि हि दीनतपस्व्यादौ विषये गुरूणां पित्रादिकुलवृद्धानामनुज्ञया, भृत्यानुपरोधेन पोष्यवर्गाविघातेन, भृत्यपदमितरपोष्योपलक्षणं यद्दानं तन्महादानमन्यत्तु एतद्विशेषणरहितं पुनर्दानमेव ॥ १३ ॥

एवं महादानं दानं चाभिधाय देवार्च्चनमाह ॥

**देवगुणपरिज्ञानात्तद्भावानुगतमुत्तमं विधिना। स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम् ॥ १४ ॥**

य० देवगुणपरिज्ञानात् देवगुणानां वीतरागत्त्वादीनां परिज्ञानमवबोधस्तस्मात्, तद्भावानुगतमुत्तमं विधिना तेषु गुणेषु भावो बहुमानस्तेनानुगतं युक्तं, उत्तमं प्रधानं, विधिना शास्त्रोक्तेन, स्यादादरादियुक्तं यत् आदरकरणप्रीत्यादिसमन्वितं यत् स्यात् तद्देवार्चनं चेष्टं तच्च देवार्च्चनमिष्टम् ॥ १४ ॥

उ० देवार्च्चनेप्येनमतिदेशमाह देवेत्यादि। देवगुणानां वीतरागत्वादीनां परिज्ञानात्तेषु गुणेषु यो भावो बहुमानस्तेनानुगतं

युक्तमुत्तमं प्रधानं, विधिना शास्त्रोपदेशेन, यदादरादिना युक्तं स्यादादिना करणप्रीत्यविघ्नसंपदागमादिसंग्रहः। तदेवार्चनं चेष्टं अन्यत्तु देवार्चनमात्रम् ॥ १४ ॥

प्रस्तुत एव संबन्धार्थमिदमाह ॥

**एवं गुरुसेवादि च काले सद्योगविघ्नवर्जनया । इत्यादिकृत्यकरणं लोकोत्तरतत्त्वसंप्राप्तिः ॥ १५ ॥**

य० एवं गुरुसेवादि च एवं विधिनैव गुरूणां धर्म्माचार्यप्रभृतीनां, सेवा आदिशब्दात्पूजनादिग्रहः काले अवसरे, सद्योगविघ्नवर्ज्जनया संतश्च ते योगाश्च सद्योगा धर्म्मव्यापाराः स्वाध्यायध्यानादयस्तेषु विघ्न उपरोधो विघातस्तस्य वर्ज्जनया गुरुसेवादि विधेयं इत्यादिकृत्यकरणं एवमादीनां कृत्यानां कार्याणामागमोक्तानां करणं विधानं, लोकोत्तरतत्त्वसंप्राप्तिरुच्यत इति ॥ १५ ॥

उ० अन्यत्राप्येनमतिदेशमाह । एवमित्यादि । एवं विधिनैव गुरूणां धर्म्माचार्यादीनां सेवा तदादि आदिना पूजनादिग्रहः । कालेऽसवरे सद्योगानां शोभनधर्मव्यापाराणां स्वाध्यायध्यानादीनां, विघ्नवर्जनया विघातत्यागेन, विधेयमिति वाक्यशेषः । इत्यादीनामेवमादीनां कृत्यानामागमोक्तानां करणं विधिना संपादनं लोकोत्तरतत्त्वसंप्राप्तिरुच्यते । विधियुक्तं हि दानादि यन्महत्पदेष्टपदसत्पदादिभिर्विशिष्यते तदेव लोकोत्तरपदाभिधेयमिति भावः ॥ १५ ॥

इयं च कथं संपद्यत इत्याह ॥

**इतरेतरसापेक्षा त्वेषा पुनराप्तवचनपरिणत्या । भवति यथोदितनीत्या पुंसां पुण्यानुभावेन ॥ १६ ॥५॥**

य० इतरेतरसापेक्षा तु इतरेतरसापेक्षैव परस्पराविरोधिनी । एषा पुनराप्तवचनपरिणत्या एषा पुनर्लोकोत्तरतत्त्वसंप्राप्तिराप्तस्य यद्वचनं तत्परिणत्या आगमपरिणत्या । भवति यथोदितनीत्या जायते यथोक्तन्यायेन पुंसां पुण्यानुभावेन पुरुषाणां पुण्यविपाकेन ॥ १६ ॥ ५ ॥

उ० इयं पुनरेकार्थक्रियायां सकलार्थक्रिया सापेक्षा स्यादित्याहेतरेतरेत्यादि । एषा पुनर्लोकोत्तरतत्त्वसंप्राप्तिराप्तवचनस्य परिणत्यैकक्रिया सकलक्रियासापेक्षेतिसंस्काररूपया, यथोदितनीत्या यथोक्तन्यायेन, पुंसां पुण्यानुभावेन सद्बुद्धिहेतुपुण्यविपाकेनेतरेतरसापेक्षा परस्परकार्याविरोधिन्येव भवति कार्यांतरविरोधिनः सत्कार्यस्यापि लौकिकत्त्वादितिभावः॥१६॥५॥

॥ इति पञ्चमं षोडशकम् ॥

---

इदानीं लोकोत्तरतत्त्वसंप्राप्तौ यद्भवति तदाह ॥

**अस्यां सत्यां नियमाद्विधिवज्जिनभवनकारणविधानम् । सिद्ध्यति परमफलमलं ह्यधिकार्यारंभकत्त्वेन॥१॥**

य० अस्यां सत्यां नियमाल्लोकोत्तरतत्त्वसंप्राप्तौ । विधिवद्विधिना, जिनभवनकारणविधानं जिनभवनं कारयत्यन्यैस्तस्य जिनभवनकारणस्य विधानं संपादनं, सिद्ध्यति परमफलं प्रकृष्टफलं, ह्यलमत्यर्थमधिकार्यारंभकत्त्वेन अधिकारिण आरंभकत्त्वं तेन ॥ १ ॥

उ० लोकोत्तरतत्त्वसंप्राप्तिरुक्ता तदुत्तरं यल्लभ्यते तदाह । अस्यामित्यादि । अस्यां लोकोत्तरतत्त्वसंप्राप्तौ सत्यां नियमाद्

योग्यतानियमाद्विधिवद्विधिना, जिनभवनस्य कारणैः प्रयोज्यकर्त्तृभिः कृत्वा विधानं संपादनं सिद्ध्यति, परमफलं प्रकृष्टफलं, ह्यलमत्यर्थमधिकारी आरंभको यत्र तत्त्वेन तद्भावेन ॥ १ ॥

कः पुनरस्याधिकारीत्याह ॥

न्यायार्ज्जितवित्तेशो मतिमान् स्फीताशयः सदाचारः। गुर्वादिमतो जिनभवनकारणस्याधिकारीति ॥२॥

य० न्यायार्ज्जितवित्तेशो न्यायोपार्ज्जितद्रव्यस्वामी, मतिमान् प्रतिभासंपन्नः, स्फीताशयः वृद्धिगतधर्म्माध्यवसायः, सदाचारः शोभनाचारो, गुर्व्वादिमतो गुरूणां पितृपितामहादीनां राजामात्यप्रभृतीनां च मतोऽभिमतो बहुमतो जिनभवनकारणस्य प्रस्तुतस्याधिकारीति शास्त्रनियुक्तत्वेन ॥ २ ॥

उ० कीदृग्गुणः पुनरयमधिकारीत्याह । न्यायेत्यादि । न्यायार्ज्जितवित्तस्येशः स्वामी, मतिमानायतिहितज्ञः, स्फीताशयप्रवृद्धधर्माध्यवसायः, सदाचारोऽनिन्द्याचारः, गुर्वादीनां पितृपितामहादिराजामात्यादीनामभिमतो बहुमतः, जिनभवनकारणस्याधिकारी शास्त्राज्ञाशुद्धत्वादितिरधिकारिविशेषणसमाप्त्यर्थः ॥ २ ॥

जिनभवनकारणविधानमित्युक्तं तद्गतमिदमाह ॥

कारणविधानमेतच्छुद्धा भूमिर्दलं च दार्वादि । भृतकानतिसंधानं स्वाशयवृद्धिः समासेन ॥ ३ ॥

य० कारणे निर्वर्त्तने प्रयोजकव्यापारे विधानमेतद्विधिरेष वर्त्तते प्रकार इत्यर्थः शुद्धा भूमिर्वक्ष्यमाणा दलं च दार्व्वादि दारुप्रभृति भृतकानतिसंधानं भृतकानां कर्मकराणामवञ्चनं, स्वाशयवृद्धिः शुभपरिणामवृद्धिः, समासेन संक्षेपेण ॥ ३ ॥

उ० कारणविधिगतमाह । कारणे निर्वर्त्तनप्रयोजकव्यापारे विधानमेतद्विधिद्वाररराशिरेपः शुद्धा भूमिर्वक्ष्यमाणा दलं च दार्वादि दारुप्रभृति भृतकानां कर्मकराणामनतिसन्धानमवञ्चनं स्वाशयस्य शुभपरिणामस्य वृद्धिः समासेन संक्षेपेण ॥३॥

शुद्धा भूमिरित्युक्तं सैवोच्यते ॥

**शुद्धा तु वास्तुविद्याविहिता सन्न्यायतश्च योपात्ता । न परोपतापहेतुश्च सा जिनेन्द्रैः समाख्याता ॥४॥**

य० शुद्धा तु शुद्धा पुनर्भूमिर्व्वास्तुविद्याविहिता वास्तुविपया विद्या तया विहिता समर्थिताऽनिराकृता, सन्न्यायतश्च योपात्ता सन्न्यायेन च या गृहीता न पराभिभवेन । न परोपतापहेतुश्च न प्रातिवेशिमकोपतापहेतुश्च सा मुनीन्द्रैः समाख्याता शुद्धा भूमिरिति ॥ ४ ॥

उ० तत्र शुद्धभूमिस्वरूपं तावदाह । शुद्धा त्वित्यादि । शुद्धा तु शुद्धा पुनर्भूमिर्वास्तुविपया या विद्या तया विहिता समर्थिताऽनिराकृतेतियावत् । सन्न्यायतः सुशोभनन्यायेन योपात्ता गृहीता नतु धनिकपराभवेन । न नैव परस्य प्रातिवे-शिमकादेरुपतापहेतुश्च सा मुनीन्द्रैः परमज्ञानिभिः समाख्याता ॥ ४ ॥

किमित्येवमुपदिश्यत इत्याह ॥

**शास्त्रबहुमानतः खलु सच्चेष्टातश्च धर्मनिष्पत्तिः । परपीडात्यागेन च विपर्ययात्पापसिद्धिरिव ॥ ५ ॥**

य०शास्त्रवहुमानतः खलु वास्तुविद्याशास्त्रवहुमानेन, सच्चेष्टातश्च पराभिभवपरिवर्ज्जनेन, धर्म्मनिष्पत्तिः धर्मसंसिद्धिः

परपीडात्यागेन च परोपतापविरहेण च, विपर्ययात्पापसिद्धिरिव शास्त्राऽबहुमानासच्चेष्टापरपीडालक्षणाद्विपर्ययात्पापसिद्धिरिव पापनिष्पत्तिरिव कारणत्रयाद्धर्म्मनिष्पत्तिर्भवतीति ॥ ५ ॥

उ० किमित्येवमुपदिश्यत इत्याह । शास्त्रेत्यादि । शास्त्रस्य प्रकृतविध्युपदेशकस्य वास्तुशास्त्रादेः बहुमानतः खलु बहुमानादेव सच्चेष्टातश्चोत्पन्नपराभिभवत्यागप्रधानोद्यमाच्च परपीडायाः परोपतापस्य त्यागेन भाविनोऽनुत्पादेन च धर्म्मनिष्पत्तिर्भवति विपर्ययादुक्तविपरीतहेतुत्रयाच्छास्त्राबहुमानासच्चेष्टापरपीडालक्षणात्पापस्य सिद्धिरुत्पत्तिरिव यद्विपर्ययः पापहेतुः स धर्म्महेतुरिति न्यायगतिः ॥ ५ ॥

न केवलमेवमित्थं च धर्म्मनिष्पत्तिरित्याह ॥

## तत्रासन्नोऽपि जनोऽसंबन्ध्यपि दानमानसत्कारैः। कुशलाशयवान् कार्यो नियमाद्बोध्यंगमयमस्य ॥ ६ ॥

य० तत्रासन्नोपि जनो यस्तद्देशवर्ती असंबन्ध्यपि स्वजनादिसंबन्धरहितोऽपि, दानमानसत्कारैः दानमन्नपानवस्त्रादेर्म्मानो मान्यत्वं, सत्कारः सत्क्रिया आसनप्रदानादिरूपा तैः। कुशलाशयवान् कार्यो जन इति वर्त्तते नियमान्नियमेन। बोधेरंगं कारणमयं कुशलाशयोऽस्य जनस्य बोधिलाभहेतुः कुशलाशयो भवति जनस्येति यावत् ॥ ६ ॥

उ० अन्यदपि तदा धर्मसिद्ध्यङ्गमाह। तत्रेत्यादि तत्र जिनभवनारंभे आसन्नोऽपि यस्तद्देशवर्त्ती जनोऽसंबन्ध्यपि स्वजनादिसंबंधरहितोऽपि सोऽपि दानमन्नपानवस्त्रादिवितरणं मानोऽभ्युत्थानादिक्रिया सत्कार आसनप्रदानादिव्यापारस्तैः कृत्वा

कुशलाशयवान् धन्योऽयं जैनो धर्मो यत्रैतादृशमौचित्यमिति प्रशंसाभिव्यङ्ग्यशुभपरिणामयुक्तः कार्यः नियमान्निश्चयेनायं कुशलाशयोऽस्य जनस्य बोध्यङ्गं बोधिहेतुरतश्च परोपकारगुणात्कारयितुर्महाँल्लाभः ॥ ६ ॥

दलं च दार्व्वादीत्युक्तं तदाह ॥

**दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः क्रीतम्। उचितक्रयेण यत्स्यादानीतं चैव विधिना तु ॥७॥**

य० दलमिष्टकादि तदपि च शुद्धं आदिग्रहणात्पाषाणादिग्रहः कीदृक् शुद्धं तत्कारिवर्गतः क्रीतं उचितक्रयेण यत्स्यात् तत्करणशीलास्तत्कारिणः स्वयमेव प्रवृत्ता इष्टकादिषु तद्वर्गात्क्रीतमुचितमूल्येन यत्तच्छुद्धं। आनीतं चैव विधिना तु लोकशास्त्रदृष्टेन ॥ ७ ॥

उ० दलं च दार्वादीत्युक्तं तत्राह। दलमित्यादि। दलं जिनभवनोपादानमिष्टकादि आदिना पाषाणादि तदपि शुद्धं कीदृक् शुद्धं यत्तत्कारिणां स्वप्रयोजनसिद्ध्यर्थमेवेष्टकादिकरणशीलानां पुरुषाणां वर्गतः समूहादुचितक्रयेणोचितमूल्येन क्रीतं स्वीकृतं तु पुनः विधिना लोकशास्त्रदृष्टेन भारवाहकापरिपीडनादिलक्षणेनानीतं चैव ॥ ७ ॥

दलविशेषगतमेवाह ॥

**दार्वपि च शुद्धमिह यत्नानीतं देवताद्युपवनादेः। प्रगुणं सारवदभिनवमुच्चैर्ग्रन्थ्यादिरहितं च ॥८॥**

य० दार्व्वपि च शुद्धमिह ज्ञेयमिति गम्यते। यत्नानीतं देवताद्युपवनादेर्देवतादीनामुपवनं तत्समीपवर्ति आदिग्रहणाद्देवपुरुषग्रहो द्वितीयादिशब्दात्तिर्यङ्मानुष्यसंबन्धिकाननग्रहः। दारुविशेषणमाह। प्रगुणमवक्रं सारवत् स्थिरं खदिरवत्, अभिनवं च प्रत्यग्रं, न जीर्णं उच्चैरत्यर्थं, ग्रंथ्यादिरहितं च ग्रंथ्यादिदोषविकलं ॥ ८ ॥

उ० दलविशेषमाह । दार्वपि चेत्यादि । दार्वपि चेह जिनभवनविधाने शुद्धं तद् ज्ञेयमितिगम्यम् । यत्नानीतं देवतादीनां देव्यादीनामुपवनं समीपवर्ति वनं तदादेः प्रथमादिपदात्पुंदेवग्रहः द्वितीयादिपदात्तिर्यङ्मनुष्यसंबन्धिकाननग्रहः तथा प्रगुणमवक्रं सारवत् स्थिरं खदिरसारवत् अभिनवं प्रत्यग्रं न जीर्णं उच्चैरतिशयेन ग्रन्थ्यादिभिर्दोषै रहितम् ॥ ८ ॥

विधिनेत्युक्तं तमेवाह ॥

**सर्वत्र शकुनपूर्वं ग्रहणादावत्र वर्त्तितव्यमिति । पूर्णकलशादिरूपश्चित्तोत्साहानुगः शकुनः ॥ ९ ॥**

य० सर्व्वत्रेष्टकादौ शकुनपूर्व्वं शकुनमूलं ग्रहणादावत्र वर्त्तितव्यमिति ग्रहणानयनादौ प्रवर्त्तितव्यं नान्यथा कः पुनः शकुन इत्याह । पूर्णकलशादिरूपो जलपरिपूर्णघटदूर्व्वाभारोद्धृतमृत्तिकादिरूपः अयं च वाह्य इत्यान्तरपरिग्रहार्थं विशेषणमाह । चित्तोत्साहानुगः शकुनः मनःसमुत्साहमनुगच्छति ॥ ९ ॥

उ० दलं विधिनानीतमित्युक्तं तत्र विधिगतमेवाह । सर्वत्रेत्यादि । अत्र जिनभवनलक्षणमहाकार्यारंभे सर्वत्रेष्टकादौ ग्रहणादौ ग्रहणानयनादौ शकुनपूर्वं शकुनमूलं यथा स्यात्तथा प्रवर्त्तितव्यं नान्यथा । कः पुनः शकुन इत्याह । पूर्णकलशो जलपरिपूर्णघटस्तदादिरूप आदिना दधिदूर्वाक्षतभारोद्धृतमृत्तिकादिग्रहणं अयं च वाह्य इत्यांतरपरिग्रहार्थं विशेषणमाह । चित्तोत्साहानुगो मनःप्रत्ययानुसारी शकुन इदमुपलक्षणं गुरुवचनानुगतत्त्वस्याप्यन्यत्रात्मप्रत्ययगुरुप्रत्ययशकुनप्रत्ययैस्त्रिधा शुद्धस्य कार्यस्य सिद्ध्युन्मुखत्त्वप्रतिपादनादिति द्रष्टव्यम् ॥ ९ ॥

भृतकानतिसंधानमित्युक्तं ते कीदृशा इत्याह ॥

**भृतका अपि कर्त्तव्या य इह विशिष्टाः स्वभावतः केचित् । यूयमपि गोष्ठिका इह वचनेन सुखं तु ते स्थाप्याः१०**

य० भृतका अपि कर्म्मकरा अपि कर्त्तव्या विधेया य इह विशिष्टा लोकव्यवहारेण स्वभानतः केचित् स्वभावेनैव किमिति विशिष्टा आश्रीयन्त इत्याह । यूयमपि भवन्तोऽपि गोष्ठिका इह प्रस्तुतजिनभवने अनेन वचनेन सुखं तु सुखेनैव ते स्थाप्याः स्थापनीयाः प्रस्तुतकार्ये विशिष्टत्वाद्भवन्ति ॥ १० ॥

उ० भृतकानतिसन्धानगतमाह । भृतका इत्यादि । भृतकाः कर्मकरा अपि कर्त्तव्या इह ये विशिष्टा लोकव्यवहारेण स्वभावतः स्वभावेनैव केचिद्भवंति यूयमपि भवंतोऽपि गोष्ठिकाः सहाया इह जिनभवनविधानेऽनेन वचनेन सुखं तु सुखेनैव ते स्थाप्या विशिष्टत्वादित्थं स्थापितास्ते निर्वाहका भवन्ति ॥ १० ॥

अनतिसंधानमेवाह ॥

**अतिसंधानं चैषां कर्त्तव्यं न खलु धर्म्ममित्राणां । न व्याजादिह धर्मो भवति तु शुद्धाशयादेव॥११॥**

य० अतिसन्धानं च वञ्चनं, एषां भृतकानां कर्त्तव्यं न खलु नैव कर्त्तव्यं, धर्म्ममित्राणां धर्म्मसुहृदां, किमिति न व्याजादिह धर्म्मः किं तु निर्व्याजप्रवृत्तेरेव भवति तु शुद्धाशयादेव निर्व्याजप्रवृत्तिगतात् ॥ ११ ॥

उ० अतीत्यादि । एषां भृतकानामतिसन्धानं च न खलु नैव कर्त्तव्यं धर्म्ममित्राणां धर्म्मसुहृदां किमिति इह शुभकर्मणि न व्याजाद्धर्मः किं तु शुद्धाशयादेव निर्व्याजपरिणामादेव ॥ ११ ॥

स्वाशयवृद्धिरित्युक्तं तत्र कः स्वाशय इत्याह ॥

देवोद्देशेनैतद्गृहिणां कर्तव्यमित्यलं शुद्धः । अनिदानः खलु भावः स्वाशय इति गीयते तज्ज्ञैः ॥ १२ ॥

य० देवोद्देशेन देवाभिसन्धिना । एतज्जिनभवनं गृहिणां कर्त्तव्यं विधेयमित्यलं, शुद्धो दोषरहितोऽनिदानः खलु भावो निदानरहित एव भावोऽध्यवसायः स्वाशय इति गीयते तज्ज्ञैः शुभाशय इत्युच्यते तद्वेदिभिः ॥ १२ ॥

उ० अथ स्वाशयवृद्धिर्वाच्या तत्र कः स्वाशय इत्याह । देवेत्यादि । देवोद्देशेन जिनभवनभक्त्यभिसन्धिमात्रेणैतज्जिनभवनं गृहिणां कर्त्तव्यं नत्वैहिकादिफलाभिलाषेण इत्येषोऽलमत्यर्थं शुद्धो निर्दोषोऽनिदानः खलु निदानरहित एव भावोऽध्यवसायः स्वाशयः शुभाशय इति गीयते तज्ज्ञैस्तद्वेदिभिः ॥ १२ ॥

अधुना वृद्धिमाह ॥

प्रतिदिवसमस्य वृद्धिः कृताकृतप्रत्युपेक्षणविधानात् । एवमिदं क्रियमाणं शस्तमिह निदर्शितं समये ॥१३॥

य० प्रतिदिवसमस्य कुशलाशयस्य वृद्धिरभ्युदयरूपा । कृताकृतप्रत्युपेक्षणविधानात् । इदं कृतं निर्व्वर्त्तितमिदमकृतं करणीयमद्यापि भाविनि काले तयोः प्रत्युपेक्षणमवलोकनं तद्विधानात् । यथोक्तं फलद्वारेण । "प्रशान्ताः सुगतिं यान्ति संयताः स्वर्गगामिनः । शांतायतनकर्तॄणां सदा पुण्यं प्रवर्द्धते ॥ १ ॥" एवमुक्तेन न्यायेनेदं जिनभवनं क्रियमाणं विधीयमानं, शस्तं प्रशस्तमिहाधिकारे निदर्शितं नितरां दर्शितमनुज्ञातं, समये सिद्धान्ते ॥ १३ ॥

उ० एतद्वृद्धिमाह । प्रतीत्यादि । प्रतिदिवसमस्य कुशलाशयस्य वृद्धिः कार्या कृताकृतयोरेतत्प्रतिबंधेन निष्पन्ननिष्पा-

द्वयोः कार्ययोः प्रत्युपेक्षणस्यावलोकनस्य विधानात्तथाहि "एतद्दृष्ट्वार्हतं चैत्यमनेके सुगतिं गताः। यास्यन्ति बहवश्चान्ये ध्याननिर्धूतकल्मषाः ॥ १ ॥ यात्रास्नात्रादिकर्मेह भूतमन्यच्च भावि यत्। तत्सर्वं श्रेयसां बीजं ममार्हच्चैत्यनिर्मितौ ॥ २ ॥ साधु जातो विधिरयं कार्योऽतः परमेष मे। अर्हच्चैत्येष्विति ध्यानं श्राद्धस्य शुभवृद्धये ॥ ३ ॥ अहंपूर्विकया भक्तिं ये च कुर्वन्ति यात्रिकाः। तेऽपि प्रवर्द्धयन्त्येव भावं श्रद्धानशालिनाम् ॥ ४ ॥ एवमुक्तद्वारशुद्ध्या क्रियमाणं जिनभवनं प्रशस्तमिह समये जैनसिद्धान्ते प्रदर्शितम् ॥ १३ ॥

किमिति शस्तं निदर्शितमित्याह ॥

## एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमं। अभ्युदयाव्युच्छित्त्या नियमादपवर्गबीजमिति ॥१४॥

य० एतज्जिनभवनमिह लोके भावयज्ञो भावपूजा सद्गृहिणः सद्गृहस्थस्य जन्मफलमिदं परमं जन्मफलमिदं प्रधानं वर्त्तते अभ्युदयाऽव्युच्छित्त्या अभ्युदयस्य स्वर्गादेरव्यवच्छेदेन सन्तत्या नियमादपवर्गबीजमिति नियमेनापवर्गस्य मोक्षस्य कारणमिति कृत्वा ॥ १४ ॥

उ० किमिति शस्तं निदर्शितमित्याह। एतदित्यादि। एतज्जिनभवनविधानमिह लोके भावयज्ञो यजेर्देवपूजार्थत्त्वाद्भावपूजा द्रव्यस्तवस्याप्यस्योक्तविधिशुद्धिद्वाराज्ञाराधनलक्षणभावपूजागर्भितत्त्वात् सद्गृहिणः सद्गृहस्थस्य जन्मनः फलमिदं परमं प्रधानमाजन्मार्जितधनस्यैतावन्मात्रसारत्त्वात् अभ्युदयस्य स्वर्गादेरव्यवच्छेदेन सन्तत्या नियमान्निश्चयेनापवर्गतरोर्मोक्षवृक्षस्य बीजमेतत् ॥ १४ ॥

एवं जिनभवनकारणमभिधाय तद्गतविशेषमाह ॥

**देयं तु न साधुभ्यस्तिष्ठंति यथा च ते तथा कार्यम् । अक्षयनीव्या ह्येवं ज्ञेयमिदं वंशतरकाण्डम् ॥ १५ ॥**

य० देयं तु न साधुभ्यो यतिभ्यो न देयमेव यथा युष्मदीयमेतदत्र शीर्णोद्धारादि भवद्भिर्विधेयं किं तु स्वयमेव तत्प्रतिजागरणीयं तिष्ठंति यथा च ते तथा कार्यम् ते साधवो यथा च तिष्ठन्ति तथा विधेयं कथं पुनस्तेषां साधूनां सबालवृद्धानां तत्रायतनेऽवस्थानमित्याह । अक्षयनीव्या हि नीविर्मूलधनं स्यादिति प्रसिद्धिः, अक्षया चासौ नीविश्च तया करणभूतया। यत्तन्मूलधनमायतनसंबंधि तत्सर्व्वप्रयत्नेन परिपालयद्भिः संवर्द्धयद्भिश्चाक्षयं कर्त्तव्यमित्यक्षयनीविरक्षयनीतिर्वा बालवृद्धग्लानसाधुसाधर्म्मिकप्रभृतीनां हि तदुपष्टंभादेव साधूनां तत्रावस्थानं प्रकल्पते । अन्यथैतद्गुणमन्तरेण क्षेत्रान्तरमाश्रयणीयं स्यात्तेनासौ लोकोत्तरतत्त्वसंप्राप्तिव्यवस्थितो गृही सर्व्वं देशकालाद्यपेक्षया साध्ववस्थानायैवं विधत्ते । एवं ज्ञेयमिदं वंशतरकाण्डं एवमुक्तन्यायेन ज्ञेयमिदं जिनभवनं शीर्णोद्धारद्वारेणानेकपुरुषसन्तानमाश्रित्य स्वपरोपकारत्त्वेन वंशस्य सकलस्यैव तरकाण्डं तरणोपायरूपमनेन हि एवं कुर्व्वता सकलोऽपि भाविपुरुषप्रवाहः सद्धर्म्मावाप्त्या संसारांबुनिधेस्तारितो भवति । स्ववंशजपूर्वपुरुषपक्षपातेन सद्धर्म्मप्रवृत्त्युपलंभादिति ॥ १५ ॥

उ० एवं जिनभवनकारणमभिधाय तद्गतविशेषमाह । देयं त्वित्यादि । तज्जिनभवनं कृत्वा साधुभ्यस्तु न देयं यथा युष्मदीयमेतत्तदत्र जीर्णोद्धारादि भवद्भिर्विधेयमिति । किं तु स्वयमेव तत् प्रतिजागरणीयं व्युत्पन्नश्रद्धानामात्यन्तिककारणं विना साधूनां द्रव्यस्तवनियोजनायोगात्, यथा च ते साधवः सबालवृद्धास्तत्रायतने तिष्ठन्ति तथा कार्यमक्षयनीव्या

हि निश्चितमहीयमानचैत्यायतनसंबन्धिमूलधनेन हेतुना कृत्वा तद्धि मूलधनं श्राद्धैः सर्वप्रयत्नेन परिपालयद्भिः संवर्द्धयद्भिश्च तथाऽक्षयं कर्त्तव्यं यथाऽभिसन्धिविशेषशुद्धेन तेन वालकवृद्धग्लानसाधुसाधर्मिकप्रभृतीनामुपष्टंभादाधाकर्मिकादिदोपरहिततत्प्रतिवद्धवहिर्मण्डपादौ साधूनामवस्थानं धर्मोपदेशाय कल्पते क्षेत्रेऽपि च तादृशचैत्यस्फातिगुणयुक्त एव तेषामवस्थानं कल्पते । एतद्गुणमन्तरेण तु क्षेत्रान्तरमाश्रयणीयं स्यात्तेनासौ लोकोत्तरतत्त्वसंप्राप्तिव्यवस्थितो गृही देशकालाद्यपेक्षया साध्ववस्थानायैव सर्वमेवं विधत्ते एवमुक्तन्यायेन ज्ञेयमिदं जिनभवनं शीर्णोद्धारद्वारेणानेकपुरुषसन्तानाश्रितोपकारफलस्यावन्ध्यत्त्वाद्वंशस्य सकलस्यैव तरकाण्डं तरणकाष्ठं एवं हि कुर्वता सकलोऽपि भाविपुरुषप्रवाहः संसारान्निस्तारितो भवति । पूर्वपुरुषपक्षपाताहिततच्चैत्यभक्तिविशेषेण स्ववंशेन सद्धर्मप्रत्युपालंभादितरचैत्येष्वपि यथाशक्ति भक्त्यत्यागेन मिथ्यात्वाद्यसिद्धेरिति द्रष्टव्यम् ॥ १५ ॥

ननु च पृथिव्याद्युपमर्दमंतरेण जिनभवनकारणं न संभवति तत्र च नियमेन हिंसांगीकर्त्तव्येत्याशंक्याह ॥

**यतनातो न च हिंसा यस्मादेषैव तन्निवृत्तिफला । तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेतदिति ॥१६॥६**

य० यतनातः प्रयत्नात् शास्त्रोक्तान्न च नैव हिंसा यथोक्तं "रागदोसविउत्तो जोगो असढस्स होइ जयणाओ" एवं यतनालक्षणाभिधानाद्रागद्वेषविमुक्तत्त्वेन भावतो हिंसानुपपत्तेस्तस्याश्च भावहिंसायाः शास्त्रे परिहर्त्तव्यत्त्वेन प्रतिपादनात् द्रव्यहिंसामप्यङ्गीकृत्य यस्मादेषैव यतनैव तन्निवृत्तिफला हिंसानिवृत्तिफला कथं पुनर्हिंसानिवृत्तिफलत्त्वं यतनाया इत्याशङ्क्याह । तदधिकनिवृत्तिभावात् । तस्यां हिंसायामधिकनिवृत्तिरधिकारंभनिवृत्तिस्तद्भावात् तत्र हि जिनभवनादिविधाने

प्रयत्नपूर्वकं प्रवर्त्तमानस्य निष्फलपरिहारेण सफलमेव कुर्व्वतः यतोऽवश्यमेवारंभांतरेभ्योऽस्ति गरीयान्विशेष इति। विहि-
तमतोऽदुष्टमेतदिति विहितं शास्त्रे जिनभवनमतो हेतोरदुष्टमदोषवदेतत्पूर्वोक्तं जिनभवनकारणमिति ॥ १६ ॥ ६ ॥

उ० ननु पृथिव्याद्युपमर्दमन्तरेण जिनभवनकारणं न संभवति तत्र च नियमेन हिंसेति कथमतो धर्मवृद्धिरित्याशं-
क्याह। यतनात इत्यादि। यतना रागद्वेषरहितः शास्त्राज्ञाशुद्धः प्रयत्नः। "रागद्दोसविउत्तो जोगो असढस्स होइ जयणाओ"
इत्यागमात्। ततो नच नैव हिंसा जिनभवनविधाने यतनायां सत्यां भावहिंसानुपपत्तेस्तस्या एव शास्त्रे परिहर्त्तव्यत्त्वेन
प्रतिपादनाद् द्रव्यहिंसायास्तु सर्वथा साधुविहारादावपि दुःपरिहरत्वाद्द्रव्यहिंसामप्याश्रित्याह। यस्मादेषैव यतनैव तन्निवृ-
त्तिफला हिंसानिवृत्तिफला कथमिति चेत्तस्यां हिंसायामधिकनिवृत्तेरधिकारंभत्यागस्य भावात् तत्र हि जिनभवनादिवि-
धाने सर्वादरेण प्रवर्त्तमानस्य निष्फलपरिहारेण सफलमेव कुर्वतोऽवश्यमेवास्त्यारंभान्तरनिवृत्तिविशेषः विहितं शास्त्रे
जिनभवनमतो हेतोरदुष्टमदोषवदेतज्जिनभवनविधानमिति विहितत्त्वादेव न निरारंभसामायिकादिनैतदन्यथासिद्धिरेका-
नुष्ठानस्य विहितान्यानपवादकत्त्वादन्यथा दानादीनामपि तेनान्यथासिद्ध्यापत्तेरिति दिक् ॥ १६ ॥ ६ ॥

॥ इति षष्टं षोडशकम् ॥

---

एवं जिनभवनकारणविधानमभिधाय तद्बिम्बस्य कारयितव्यतां प्रत्याह ॥

**जिनभवने तद्बिम्बं कारयितव्यं द्रुतं तु बुद्धिमता। साधिष्ठानं ह्येवं तद्भवनं वृद्धिमद्भवति ॥ १ ॥**

य० जिनभवने जिनायतने तद्बिम्बं जिनबिम्बं, कारयितव्यं कारणीयं द्रुतं तु शीघ्रमेव बुद्धिमता बुद्धिसंपन्नेन, किमिति द्रुतं कारयितव्यमित्याह हियस्मात्साधिष्ठानं साधिष्ठातृकमेव जिनबिम्बेनैव तद्भवनं प्रस्तुतं वृद्धिमद्भवति वृद्धिभाग्भवति॥१॥

उ० एवं जिनभवनकारणविधानमभिधाय तद्बिम्बस्य कारयितव्यतां सङ्गमयति । जिनेत्यादि । जिनभवने तस्य जिनस्य बिम्बं कारयितव्यं द्रुतं तु शीघ्रमेव बुद्धिमता कार्यक्रमधीशालिना हि यत एवं जिनबिम्बकारणे तत् प्रस्तुतं भवनं साधिष्ठानमधिष्ठातृसहितं वृद्धिमद्भवति तज्जनितपुण्यस्य तत्प्रवर्द्धकत्वात् ॥ १ ॥

तद्बिम्बकारणविधिमाह ॥

**जिनबिम्बकारणविधिः काले पूजापुरस्सरं कर्तुः । विभवोचितमूल्याऽर्पणमनघस्य शुभेन भावेन ॥२॥**

य० जिनबिम्बकारणविधिरभिधीयत इति वाक्यशेषः कालेऽवसरे पूजापुरःसरं भोजनपत्रपुष्पफलपूजापूर्व्वकं कर्त्तुः शिल्पिनः, वि(वै)ज्ञानिकस्य विभवोचितस्य, मूल्यस्य धनस्यार्प्पणं समर्प्पणमनघस्याव्यसनस्य, शुभेन प्रशस्तेन, भावेनान्तःकरणेन॥२॥

उ० बिम्बकारणविधिमाह । जिनेत्यादि । जिनबिम्बकारणविधिरभिधीयत इति वाक्यशेषः । काले शुभमुहूर्त्तादौ, पूजा भोजनपत्रपुष्पफलादिना पुरस्सरा यत्र यस्यां क्रियायां । तथा कर्तुः शिल्पिनः, विभवोचितस्य स्वसंपदनुसारिणो मूल्यस्यार्पणमनघस्य व्यसनरहितस्य, शुभेन प्रशस्तेन, भावेनाध्यवसायेन ॥ २ ॥

अनघस्येत्युक्तं तद्व्यतिरेकेणाह ॥

**नार्पणमितरस्य तथा युक्त्या वक्तव्यमेव मूल्यमिति । काले च दानमुचितं शुभभावेनैव विधिपूर्वम् ॥३॥**

अस्मिन् व्यतिकर इत्युक्तं तमेवाश्रित्याह ॥

**एप द्वयोरपि महान् विशिष्टकार्यप्रसाधकत्वेन । संवन्धं इह क्षुण्णं न मिथः सन्तः प्रशंसन्ति ॥ ५ ॥**

य० एपयोगो द्वयोरपि पूर्वोक्तयोर्म्महान् गुरुर्विशिष्टकार्यप्रसाधकत्त्वेन जिनविम्बनिर्व्वर्त्तकत्त्वेन । इह संवन्धे क्षुण्णं वैकल्यं न मिथः परस्परं सन्तः सत्पुरुपाः प्रशंसन्ति स्तुवन्ति ॥ ५ ॥

उ० अविनष्टचित्तसंवन्धंस्तुवन्नाह । एपेत्यादि । एप परस्परमविनष्टचित्तयोगो द्वयोरपि प्रागुक्तयोर्विशिष्टकार्यस्य फलवज्जिनविम्वलक्षणस्य प्रसाधकत्त्वेन निर्विघ्ननिर्वर्तकत्त्वेन महान् गुरुः । इह संवन्धे क्षुण्णं वैकल्यं मिथः परस्परं सन्तः सत्पुरुपा न प्रशंसन्ति स्तोकस्यापि चित्तभेदस्य फलहानिकरत्त्वादितिभावः ॥ ५ ॥

जिनविम्बकारणे भावप्राधान्यमुररीकृत्याह ॥

**यावन्तः परितोपाः कारयितुस्तत्समुद्भवाः केचित् । तद्विम्बकारणानीह तस्य तावन्ति तत्त्वेन ॥ ६ ॥**

य० यावन्तो यत्परिमाणाः परितोपाः प्रीतिविशेपाः कारयितुरधिकृतस्य तस्य समुद्भवा विम्बसमुद्भवाः केचित्केऽपि चिच्छब्दोऽप्यर्थे तद्विम्बकारणानि जिनविम्बनिर्वर्त्तनानीह प्रक्रमे तस्य कारयितुस्तावन्ति तत्परिमाणानि तत्त्वेन परमार्थेन॥६॥

उ० जिनविम्बकारणे भावप्राधान्यं पुरस्कुर्वन्नाह । यावन्त इत्यादि । यावन्तो यत्परिमाणाः परितोपाः प्रीतिविशेपाः । कारयितुरधिकृतस्य तत्समुद्भवा बिम्बनिमित्तजनिताः केचित्केऽपि चिच्छब्दोऽप्यर्थे इह प्रक्रमे तस्य कारयितुस्तद्विम्बकार-

णानि जिनविम्वनिर्वर्त्तनानि तावन्ति तत्परिमाणानि तत्त्वेन परमार्थेन तावत्फलसंपत्तेः फलस्य भावानुसारित्वात्ततः प्रीतिनिशेष इह सानुवन्धः कर्त्तव्य इति हृदयम् ॥ ६ ॥

चित्तविनाशोऽत्र प्रतिषिद्ध इत्युक्तं तमाश्रित्याह ॥

**अप्रीतिरपि च तस्मिन् भगवति परमार्थनीतितो ज्ञेया । सर्व्वापायनिमित्तं ह्येषा पापा न कर्त्तव्या॥७॥**

य० अप्रीतिरपि च चित्तविनाशरूपा । तस्मिन् शिल्पिनि क्रियमाणा भगवति जिने । परमार्थनीतितः परमार्थन्यायेन । कारयितुर्ज्ञेया सर्व्वापायनिमित्तं हि यतः सर्व्वेषामपायानां प्रत्यवायानां निमित्तमप्रीतिस्तस्मादेषा पापाऽप्रीतिर्न कर्त्तव्या न विधेया ॥ ७ ॥

उ० चित्तविनाशनिषेधोक्तौ पुष्टहेतुमाह—अप्रीतिरित्यादि । अप्रीतिरपि च चित्तविनाशरूपा तस्मिन् शिल्पिनि विम्वद्वारा क्रियमाणे भगवति जिने परमार्थनीतितः कारणारुचिः कार्यारुचिमूलेतिपरमार्थन्यायेन कारयितुर्ज्ञेया । हि यतः सर्वेषामपायानां प्रत्यूहानां निमित्तमियमप्रीतिस्तस्मादेषा पापा न कर्त्तव्या न विधेया ॥ ७ ॥

कथं पुनस्तत्कारयितव्यमित्याह ॥

**अधिकगुणस्थैर्नियमात् कारयितव्यं स्वदौर्हृदैर्युक्तम् । न्यायार्जितवित्तेन तु जिनबिम्बं भावशुद्धेन ॥८॥**

य० अधिकगुणस्थैरधिकगुणवर्त्तिभिः प्राक्तनकालापेक्षया नियमान्नियमेन कारयितव्यं कारणीयं स्वदौर्हृदैः स्वमनोरथैः

शिल्पिगतैर्युक्तं सहितं न्यायार्ज्जितवित्तेन तु न्यायोपात्तद्रविणेन तु करणभूतेन जिनविम्बं जिनप्रतिमारूपं भावशुद्धेन भावेन सदन्तःकरणलक्षणेन शुद्धं यन्न्यायार्ज्जितवित्तं तेन ॥ ८ ॥

उ० यत एवं शिल्पिगताऽप्रीतिरयुक्ता ततस्तद्गतामाहार्येच्छया प्रीतिमुत्पाद्य जिनविम्बं कारयितव्यमित्यनुशास्ति । अधिकेत्यादि । अधिकगुणः क्रियमाणविम्बप्रतियोगी भगवांस्तत्स्थैस्तद्वर्त्तिभिः स्वदौर्हृदैः स्वमनोरथैः शिल्पिगतैर्युक्तं सहितं नियमान्निश्चयेन न्यायार्ज्जितवित्तेनैव भावशुद्धेनान्तःकरणनिर्मलेन जिनविम्बं कारयितव्यम् ॥ ८ ॥

स्वदौर्हृदैर्युक्तमित्युक्तं तद्विवरीपुराह ॥

**अत्रावस्थात्रयगामिनो बुधैर्दौर्हृदाः समाख्याताः । बालाद्याश्चैत्ता यत्तत्क्रीडनकादि देयमिति ॥ ९ ॥**

य० अत्र जिनविम्बकारणे अवस्थात्रयगामिनो बालकुमारयुवलक्षणावस्थात्रयगामिनो बुधैर्विद्वद्भिर्दौर्हृदा मनोरथाः समाख्याताः कथिता बालाद्याश्चैत्ता यत् चित्ते भवाश्चैत्ताः शिल्पिचित्तगता यद्यस्मात्तु वर्त्तन्ते । तत्तस्माच्चैत्तबालाद्यवस्थात्रयमनोरथसंपत्तये क्रीडनकादि क्रीडनकं विस्मयकारि भोगोपकारणजातं देयमुपढौकनीयमिति एवंप्रकारं इदमुक्तं भवति–शिल्पी बालो युवा मध्यमवया वा प्रतिमानिर्म्माणे व्याप्रियते तस्य तदवस्थात्रयमनादृत्य प्रतिमागतावस्थात्रयदर्शिनश्चैत्ता ये दौर्हृदाः समुत्पद्यन्ते तत्परिपूरणाय यतितव्यम् ॥ ९ ॥

उ० उक्तदौर्हृदयोगमेव विवृणोति । अत्रेत्यादि । अत्र जिनविम्बकारणेऽवस्थात्रयगामिनो बालकुमारयुवलक्षणावस्थात्रयानुसारिणः दौर्हृदा मनोरथा बालाद्या बालादिशिल्प्यारोपिताश्चैत्ताश्चित्तप्रभवा बुधैः समाख्याता यद्यस्माद्वर्त्तन्ते तत्त-

स्मात् क्रीडनकादि क्रीडनकं विस्मयकृदुपभोगोपकरणजातमादिनाभोगोपकरणसंग्रह इत्येवंप्रकारं चैतद्बालाद्यवस्थात्रयमनोरथसम्पादकं। इदमुक्तं भवति। शिल्पी बालो युवा मध्यमवया वा प्रतिमानिर्म्माणे व्याप्रियते, तस्य तदवस्थात्रयमनादृत्य प्रतिमागतावस्थात्रयभावनेन चैत्तदौर्हृदत्रयमुत्थाप्य शिल्प्यालम्बनेन तत्परिपूरणाय यतितव्यमिति ॥ ९ ॥

भावशुद्धेनेत्युक्तं तदुपदर्शनायाह ॥

**यद्यस्य सत्कमनुचितमिह वित्ते तस्य तज्जमिह पुण्यम्। भवतु शुभाशयकरणादित्येतद्भावशुद्धं स्यात्१०॥**

य० यत्स्वरूपेण यन्मात्रं यस्य सत्कं यस्य संबन्धि वित्तमितिगम्यते अनुचितमयोग्यमिह वित्ते मदीये। कथंचिदनुप्रविष्टं तस्य पुरुषस्य तस्माज्जातं तज्जमिह बिम्बकरणे पुण्यं पुण्यकर्म्म भवत्वस्तु शुभाशयकरणात् शुभपरिणामकरणादित्येवमुक्तनीत्या एतन्न्यायार्ज्जितं वित्तं पूर्व्वोक्तं भावशुद्धं स्यात्। परकीयवित्तेन स्ववित्तानुप्रविष्टेन पुण्यकरणानभिलाषाद्भावेनान्तः करणेन शुद्धं भवेत् ॥ १० ॥

उ० भावशुद्धेनेति यदुक्तं तद्विवरीषुराह। यदित्यादि। यद्यन्मात्रं यस्य सत्कं यस्य संबन्धि वित्तमितिगम्यतेऽनुचितं स्वीकारायोग्यमिह मदीये वित्ते कथंचिदनुप्रविष्टं तस्य तत्स्वामिनस्तज्जं तद्वित्तोत्पन्नमिह बिम्बकरणे पुण्यं भवत्वित्येवं शुभाशयकरणादेतन्न्यायार्ज्जितवित्तं भावशुद्धं स्यात्परकीयवित्तेन स्ववित्तानुप्रविष्टेन पुण्यकरणानभिलाषात्सर्वांशेन स्ववित्तशुद्धेः ॥ १० ॥

जिनविम्वकारणविधिरभिधीयत इत्युक्तं तद्गतमेव विशेषमाह ॥

**मन्त्रन्यासश्च तथा प्रणवनमःपूर्वकं च तन्नाम । मन्त्रः परमो ज्ञेयो मननत्राणे ह्यतो नियमात् ॥ ११ ॥**

य० मन्त्रन्यासश्च तथा जिनविम्वे कारयितव्यतयाभिप्रेते मन्त्रस्य न्यासो विधेयः कः पुनः स्वरूपेण मन्त्र इत्याह । प्रणवनमःपूर्वकं च तन्नाम । मन्त्रः परमो ज्ञेयः प्रणव ॐकारो नमःशव्दश्च तौ पूर्व्वावादी यस्य तत्प्रणवनमःपूर्व्वकं तस्य विवक्षितस्य ऋषभादेर्न्नाम तन्नाम मन्त्रः परमः प्रधानो ज्ञेयो वेदितव्यः किमित्याह । मननत्राणे ह्यतो नियमात् हिर्यस्मादतः प्रणवनमःपूर्वकान्नाम्नः सकाशात् ज्ञानरक्षणे नियमाद्भवत इति कृत्वा मन्त्र उच्यते तन्नामैवेति ॥ ११ ॥

उ० विम्वकारणविधिशेषमाह मन्त्रेत्यादि । तथा कारयितव्यतयाऽभिप्रेते जिनविम्वे मन्त्रन्यासश्च विधेयः कः पुनः स्वरूपेण मन्त्र इत्याह प्रणव ॐकारो नमः शव्दश्च तौ पूर्वावादी यस्य तत्तथा तन्नाम क्रियमाणविम्वर्षभादिनाम मन्त्रः परमः प्रधानो ज्ञेयः हि यतोऽतः प्रणवनमःपूर्वजिननाम्नो नियमान्निश्चयान्मननात्राणाच्च मन्त्र उच्यत इति ॥ ११ ॥

ननुच रत्नकनकादिभिः सुरूपमहाविम्वकरणैर्विशिष्टं फलमाहोस्वित् परिणामविशेषादित्याशङ्क्याह ॥

**विम्बं महत्सुरूपं कनकादिमयं च यः खलु विशेषः । नास्मात्फलं विशिष्टं भवति तु तदिहाशयविशेषात् १२**

य० विम्बं प्रतिमारूपं महत्प्रमाणतः सुरूपं विशिष्टाङ्गावयवसन्निवेशसौन्दर्यं कनकादिमयं च चतुर्वर्ण(सुवर्ण)रत्नादिमयं च यः खलु विशेषो वाह्यवस्तुगतः नास्मात्फलं विशिष्टमस्मादेव विशेषान्न फलविशेषो न फलमधिकं नैतदविनाभावि फलमित्यर्थः भवति तु भवत्येव तद्विशिष्टं फलमिह प्रक्रमे आशयविशेषात् यत्र भावोऽधिकस्तत्र फलमप्यधिकमिति हृदयम् ॥१२॥

एवमाशयविशेषमभिधाय तेन बिम्बकरणं समर्थयन्नाह ॥

**एवंविधेन यद्बिम्बकारणं तद्वदन्ति समयविदः। लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च ॥१४॥**

य० एवंविधेनाशयेन यद्बिम्बकारणं पूर्व्वोक्तं तद्वदन्ति प्रतिपादयन्ति समयविदः शास्त्रज्ञा लोकोत्तरमागमिकमन्यदतो लौकिकमतोऽस्मादाशयविशेषसमन्वितात् जिनबिम्बकारणात्। अन्यल्लौकिकं वर्त्तते। अभ्युदयसारं च तद्भवति ॥ १४ ॥

उ० ईदृग्विधिनाऽन्यथा च बिम्बकारणस्य नामभेदं फलभेदं चाभिधित्सुराह एवमित्यादि। एवंविधेनाशयेन प्रागुक्तेन यद्बिम्बकारणं तत्समयविदः शास्त्रज्ञा लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च लोकोत्तरमागमिकमन्यदतो लौकिकमतोऽस्मादाशयविशेषसमन्वितात् जिनबिम्बकारणादन्यल्लौकिकं वर्त्तते अभ्युदयसारं च तद्भवति ॥ १४ ॥

लौकिकमभ्युदयसारमित्युक्तं लोकोत्तरं कीदृगित्याह ॥

**लोकोत्तरं तु निर्वाणसाधकं परमफलमिहाश्रित्य। अभ्युदयोऽपि हि परमो भवति त्वत्रानुषङ्गेण ॥१५॥**

य० लोकोत्तरंतु पुनर्निर्व्वाणसाधकं मोक्षसाधकं परमफलमिहाश्रित्य प्रकृष्टफलमङ्गीकृत्याभ्युदयोऽपि स्वर्ग्गादिः, परमः प्रधानो भवति त्वत्रानुषङ्गेण भवत्येवात्र प्रसङ्गेन न मुख्यवृत्त्या ॥ १५ ॥

उ० लौकिकमभ्युदयसारमित्युक्तं लोकोत्तरं तु कीदृगित्याह। लोकेत्यादि। लोकोत्तरं तु पुनर्निर्व्वाणसाधकं परमं मुख्योद्देश्यं फलमिहाश्रित्य अभ्युदयोऽपि हि स्वर्ग्गादिः परमः प्रधानः भवति तु भवत्येवात्रानुषङ्गेणोद्देश्यसिद्धाववर्जनीयभावव्यापारलक्षणेन ॥ १५ ॥

प्रधानानुपङ्गिकप्रतिपत्त्यर्थं दृष्टान्तमाह ॥

कृपिकरण इव पलालं नियमादत्रानुषङ्गिकोऽभ्युदयः । फलमिह धान्यावाप्तिः परमं निर्व्वाणमिव विम्बात्

य० कृपिकरण इव पलालं प्रतीतं नियमादत्र जिनविम्बकारणे आनुपंगिकोऽभ्युदयः स्वर्गादिः फलमिह दृष्टान्ते धान्यावाप्तिः सस्यलाभः, परमं निर्व्वाणमिव विम्बात् धान्यनिर्व्वाणावाप्त्योः साम्यं दर्शयति ॥ १६ ॥

उ० प्रधानानुपङ्गभावे दृष्टान्तमाह कृपीत्यादि । कृपिकरणे पलालमिव नियमादत्र जिनविम्बकारेण आनुपंगिकोऽभ्युदयः स्वर्गादिः सच्छायपथेनास्य मोक्षनयनस्वभावत्त्वात् । परमं मुख्यं फलमिह जगति विम्बान्निर्व्वाणं भवति धान्यावाप्तिरिव कृपिकरणादिति विपरिणतमनुपज्यतेऽन्यथाऽसङ्गतेर्विधिना कृपिकरणविम्बकरणयोः पलालाभ्युदययोर्धान्यनिर्व्वाणावाप्त्योश्च साम्यमिति सिद्धं ॥ १६ ॥ ७ ॥

॥ इति सप्तमं पोडशकम् ॥

---

एवं विम्बकारणविधिमुपदर्श्य प्रतिष्ठाविधिमाह ॥

निष्पन्नस्यैवं खलु जिनबिम्बस्योदिता प्रतिष्ठाशु । दशदिवसाभ्यन्तरतः सा च त्रिविधा समासेन ॥१॥

य० निष्पन्नस्य निष्पत्तिमतः एवमुक्तरीत्या खलुशब्दो वाक्यालङ्कारे जिनविम्बस्यार्हत्प्रतिमाया उदिता गदिता प्रतिष्ठा प्रतिष्ठानमाशु शीघ्रं दशदिवसाभ्यन्तरतो दशदिवसाभ्यन्तरे सा च त्रिविधा समासेन । सा च प्रतिष्ठा त्रिभेदा सङ्क्षेपेण ॥१॥

उ० बिम्बकारणानन्तरं प्रतिष्ठा विधेयेति तद्विधिमाह निष्पन्नस्येत्यादि। एवमुक्तविधिना निष्पन्नस्य जिनबिम्बस्य शीघ्रं प्रतिष्ठोदिता दशदिवसाभ्यन्तर एव नवसमये तमपलक्षः सा च प्रतिष्ठा समासेन सङ्क्षेपेण त्रिविधा त्रिभेदा ॥ १ ॥

त्रैविध्यमेवाह ॥

व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च। यस्तीर्थकृद्यदा किल तस्य तदाद्येति समयविदः॥२॥

य० व्यक्त्याख्या खल्वेका वक्ष्यमाणा क्षेत्राख्या च। तथैवापरा महाख्या च महाप्रतिष्ठा। व्यक्त्याख्यास्वरूपमाह यस्तीर्थकृद्यदा किल वर्त्तमान इत्यर्थस्तस्य तदाद्येति समयविदस्तस्यैव प्रतिष्ठा व्यक्त्याख्या ॥ २ ॥

उ० त्रैविध्यमेवाह। व्यक्त्याख्येत्यादि। एका खलु व्यक्त्याख्याऽपरा क्षेत्राख्याऽपरा च महाख्या तत्र व्यक्तिप्रतिष्ठास्वरूपमाह। यस्तीर्थकृद् यदा किल वर्त्तमानतीर्थाधिपतिस्तस्य तदा तत्काले आद्या व्यक्तिप्रतिष्ठेति समयविदो ब्रुवते॥२॥

क्षेत्राख्यामाह ॥

ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया। सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ ३ ॥

य० ऋषभाद्यानां तु तथा तीर्थकृतां चतुर्विंशतेः सर्व्वेषामेव मध्यमा ज्ञेया। भरतैरावतयोश्चतुर्विंशत्युक्तेः। ततः क्षेत्रापेक्षया क्षेत्राख्या सप्तत्यधिकशतस्य तु महाविदेहभरतैरावतापेक्षया सर्व्वक्षेत्राङ्गीकरणेन चरमेह प्रतिष्ठेति गुणनिष्पन्नाभिधाना ॥ ३ ॥

उ० क्षेत्राख्यामाह। ऋषभेत्यादि। ऋषभाद्यानां तु सर्व्वेषामेव तीर्थकृतां तथा तेनरूपेण प्रतिष्ठा मध्यमा क्षेत्राख्या ज्ञेया

ष्टस्य प्रतिष्ठात्त्वमुपपादयन्नाह । भवति चेत्यादि । भवति च खलु प्रतिष्ठा शास्त्रोक्ता निजभावस्यैव कारयितृभावस्यैव देवतोद्देशान्मुख्यदेवतोद्देशेन स्वात्मन्येव स्वजीव एव परं प्रधानं यद् यस्मात्स्थापनमिह प्रतिष्ठा नतु निजभावविषयदेवतामन्तरेणान्यस्य । वचननीत्यागमोक्तन्यायेनोच्चैरत्यर्थ । यद्यपि वचनानुष्ठानव्युत्पत्तिमहिम्ना विहितक्रियामात्र एव नियमतः स्मर्यमाणभगवद्गुणानां स्वात्मनि स्थापनं संभवति तथापि यदेकगुणसिद्ध्युद्देशेन यदनुष्ठानं विहितं ततस्तदेकगुणद्वारा प्रायः परमात्मसमापत्तिर्व्युत्पन्नस्य संभवतीह तु स्थापनोद्देशेनैव विधिप्रवृत्तेस्तस्या भावतः सर्वगुणारोपविषयत्त्वात्सर्वैरेव गुणैः स एवाहमिति स्वात्मनि परमात्मा स्थापितो भवतीति महान् विशेष एतच्चोच्चैरिति पदेनाभिव्यज्यतेऽयं भावस्तात्त्विकप्रतिष्ठा । बाह्या तु जिनबिम्बादिन्यास एवायमिति निजभावस्यैव मुख्यदेवताविषयस्योपचारात्मिका प्रतिष्ठितत्त्वज्ञानाहितभक्तिविशेषेण लोकानां विशिष्टपूजाफलप्रयोजिकेति द्रष्टव्यं एतेन प्रतिष्ठाकारयितृगतादृष्टं पूजाफलप्रयोजकं परेषां तदभावात्तददृष्टक्षये प्रतिमापूज्यतानापत्तेश्चाण्डालादिस्पर्शेन व्यधिकरणेन तन्नाशायोगाच्चेति प्रतिष्ठाहिता चाण्डालादिस्पर्शनाश्या शक्तिः पूजाफलप्रयोजिकेति मीमांसकमीमांसितमपास्तम् । प्रतिष्ठितत्त्वज्ञानाहितभक्तिविशेषद्वारा प्रतिष्ठायाःपूजा फलप्रयोजकत्त्वादस्पृश्यस्पर्शादिप्रतिसंधानस्य च भक्तिविशेषव्याघातकत्त्वेनानुपपत्त्यभावाच्छक्तिपक्षे चाप्रतिष्ठितत्त्वभ्रमेऽपि विशिष्टपूजाफलापत्तेरेतेन प्रतिष्ठाध्वंस एवास्पृश्यस्पृश (स्पर्श) भावविशिष्टः पूजाफलप्रयोजक इति मणिकृन्मतमप्यपास्तमिति दिग् । भक्तिविशेषाधायकतयैव यतः प्रतिष्ठाफलवती तत एव स्वप्रतिष्ठापितत्त्वादिविशेषा अपि पुरुषविशेषे भक्तिविशेषाधायकतयाऽऽद्रियंते तथाचोक्तं ग्रंथकृतैव पूजाविंशिकायां "सयकारियाइ एसा जायइ ठवणाइ वहुफला केई । गुरुका-

रियाइ अन्ने विसिट्ठविहिकारियाए अ ॥ १ ॥ थंडिले वि य एसा मणठवणाए पसत्थिगा चेव । आगासगोमगाइहि एत्थ मुवलेवणाइ हियं ॥ २ ॥ उवयारंगा इह सोवओगसाहारणाण इट्ठफला । किंचि विसेसेण तओ सव्वे ते विभइयव्वत्ति ॥३॥

आसामर्थलेशो यथा । स्वयंकारितया स्थापनयैषा पूजा बहुफला जायत इति केचिन्मन्यन्ते गुरवो मातृपितृपितामहाद-यस्तैः कारितयेत्यन्ये विशिष्टविधिकारितयेत्यपरे स्थण्डिले शुद्धस्थानमात्रेऽप्येषा मनःस्थापनया विशिष्टविधिसामग्रीं विना पञ्चनमस्कारस्थापनामात्रेणापि प्रशस्ताभिमतात्राकाशगोमयादिभिः पवित्रोर्ध्वस्थ गोमयादिभिरुपलेपनादि भूम्यादेर्हितं तावन्मात्रविधेरपि फलदत्त्वात् एते सर्वेऽपि पक्षाः स्वोपयोगसाधारणानामनुष्ठानानां उवयारङ्गत्ति उपकाराङ्गानीति किं-चिद्विशेषेणेष्टफलाः कर्म हि सर्व सर्वस्योपयोगसदृशं प्रशस्तं नतु कस्यचित् किञ्चिज्जात्या प्रतिनियतं ततो यस्य यदुपका-रकं तस्य तदिष्टमिति स्वकृतस्थापनादिपक्षाः सर्वेपि विभक्तव्याः स्वकृतस्थापनादिबुद्ध्या भक्तिविशेषोत्पत्तौ समीचीना ममत्त्वकलहाद्युत्पत्तौ चासमीचीना इतिभावः । इत्थं च ये गुर्वादिप्रतिष्ठापितत्त्वं सर्वथानुपयोगीति वदन्ति येच विधिप्रति-ष्ठापितत्त्व एव निर्भरं कुर्वन्ति तेषामभिप्रायं त एव विदन्ति कृतमतिविस्तरेण ॥ ४ ॥

किमिति स्वात्मन्येव परं स्थापनमुच्यते नान्यत्रेत्याह ॥

**बीजमिदं परमं यत्परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ ५ ॥**

य० बीजं कारणमिदं निजभावस्यैव देवतोद्देशात्स्वात्मनि स्थापनं वर्त्तते । परमं प्रधानं यद्यस्मात्परमाया एव प्रकृष्टाया एव समरसापत्तेः समतापत्तेः । इदमुक्तं भवति–मुख्यदेवतास्वरूपगतवीतरागत्त्वादिगुणव्यवस्थापनं चेतसि तेनैव मुख्य-

देवतास्वरूपेण समतापत्तेर्हेतुर्भवति । स्थाप्येन विम्बेन तदेवंविधं स्थापनं समरसापत्तिवीजं संभवतीतिकृत्वा मुख्या निरुपचरिता हन्त प्रत्यवधारणे एषैव निजभावस्यैव प्रतिष्ठा नान्या मुख्येति विज्ञेया ॥ ५ ॥

उ० प्रकृतमुच्यते । ननु किमिति स्वात्मन्येव परं स्थापनमुच्यते नान्यत्रेत्याशङ्क्याह । वीजमित्यादि । इदं स्वात्मनि मुख्यदेवतास्वरूपगतवीतरागत्त्वादिगुणस्थापनं वीजं कारणं वर्त्तते परमं प्रकृष्टं यद् यस्मात्परमाया एव प्रकृष्टाया एव समरसापत्तेर्मुख्यदेवतास्वरूपतुल्यतापत्तेः स्थाप्येनापि विम्बेनापि सह वहिरुपचारद्वारा तद्भावस्थापनमुक्तसमापत्तिवीजमिति योगः । इति कृत्वा मुख्या निरुपचरिता हन्त प्रत्यवधारणे एषैव निजभावप्रतिष्ठैव विज्ञेया नान्या ॥ ५ ॥

ननु च मुक्त्यादिव्यवस्थितस्यैव प्रतिष्ठा किन्नेष्यत इत्याशङ्क्याह ॥

**मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं तदधिष्ठानाद्यभावेन ॥ ६ ॥**

य० मुक्त्यादौ स्थाने तत्त्वेन परमार्थेन प्रतिष्ठिताया व्यवस्थिताया न देवतायास्तु नैव देवतायाः प्रतिष्ठा विप्रकर्षात् स्थाप्ये विम्बे नच मुख्येयं नैव मुख्या देवताविषया प्रतिष्ठा मन्त्रादिसंस्कारपूर्व्विका तदधिष्ठानाद्यभावेन तया देवतया अधिष्ठानमाश्रितत्त्वमादिशब्दात्सन्निधानग्रहस्तदभावेन हेतुना अवीतरागासर्वज्ञरूपसंसारिदेवविषया त्वऽमुख्या तदधिष्ठानादिभावेन संभवत्यपीति ॥ ६ ॥

उ० ननु मुक्त्यादिव्यवस्थितस्यैव प्रतिष्ठा किं नेष्यत इत्याशङ्क्याह । मुक्त्यादावित्यादि । मुक्त्यादौ स्थाने तत्त्वेन परमार्थेन प्रतिष्ठिताया देवतायास्तु न नैव स्वजीवे प्रतिष्ठा विप्रकर्षात्किन्तु तद्भावस्यैव स्थाप्ये विम्बे नच नैव मुख्यदेवता-

विषयेयं प्रतिष्ठा तया मुख्यदेवतयाऽधिष्ठानमाश्रयणमादिनाऽहङ्कारममकारवासनारूपसन्निधानग्रहस्तच्चाधिष्ठानाद्यवीतरागसंसारिदेवतायाः कदाचित्स्याद्वीतरागदेवतायास्तु सर्वथानुपपन्नमिति भावः ॥ ६ ॥

अत्रैवाभ्युच्चयमाह ॥

**इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैषा बालक्रीडासमा भवति ॥७॥**

य० इज्या पूजा तदादेः सत्काराभरणस्नात्रादेर्नच नैव तस्या देवतायाः प्रस्तुताया उपकारः सुखानुभवसम्पादनलक्षणः कश्चिदत्र मुख्य इति । न कश्चिन्निरुपचरितो मुख्यदेवताया उपकारः संभवति । तत्तस्मादतत्त्वकल्पनैपाऽपरमार्थकल्पनैपा मुक्तिगतदेवतोपकारविषया बालक्रीडासमा भवति बालक्रीडया तुल्येयं वर्त्तते । यथा बालो नानाविधैरुपायैः क्रीडासुखमनुभवति । तथा तदुपकारार्थमिष्यमाणैः पूजासत्कारादिभिर्देवताविशेपोऽपि परितोपमनुभवतीति बालक्रीडातुल्यत्त्वमुपकारपक्षे दोपः ये त्वात्मश्रेयोऽर्थं कुर्व्वते पूजासत्कारादि न तेपामयं दोपो भवतीतिभावः ॥ ७ ॥

उ० अत्रैवाभ्युच्चयमाह । इज्यादेरित्यादि । इज्या पूजा तदादेरादिना सत्काराभरणस्नात्रादिग्रहः नच नैव तस्याः प्रस्तुतदेवताया उपकारः सुखानुभवसम्पादनलक्षणः कश्चिदत्र मुख्यो निरुपचरित इत्युपदर्शनीयः । तत्तस्मादतत्त्वकल्पनाऽपरमार्थकल्पनैषा मुक्तिस्थदेवतोपकारविषया बालक्रीडासमा भवति यथा बालो नानाविधैः क्रीडनोपायैः क्रीडासुखमनुभवति तथेज्यादिभिर्देवताविशेपोपि परितोपमिति बालक्रीडातुल्यत्त्वमुपकारपक्षे दोपः। ये त्वात्माशया(तमश्रेयोऽ)र्थं पूजादि कुर्व्वते न तेपामयं दोप इतिभावः ॥ ७ ॥

प्रतिष्ठा निजभावस्यैवेत्युक्तं तदेवानुसन्धातुमाह ॥

**भावरसेन्द्रात्तु ततो महोदयाज्जीवता स्वरूपस्य । कालेन भवति परमाऽप्रतिबद्धा सिद्धकाञ्चनता ॥ ८ ॥**

य० भावरसेन्द्रात्तु भावो रसेन्द्र इव तस्मात्पुनस्तत इति मुख्यदेवतास्वरूपालम्बनान्महोदयात्पुण्यानुबन्धिपुण्यविभूतिलाभेन जीवता स्वरूपस्यातमभावरूपस्य । कालेन विवक्षितेन कियतापि भवति जायते परमा प्रकर्षवर्त्तिनी अप्रतिबद्धाऽप्रतिस्खलिता अनुपहता सिद्धकाञ्चनता सिद्धसुवर्णत्त्वं ॥ ८ ॥

उ० निजभावपक्ष एवोपपत्तिमाह । भावेत्यादि । भावो रसेन्द्र इव तस्मात्तु मुख्यदेवतास्वरूपालंबनान्महोदयात् पुण्यानुबन्धिपुण्यसंपल्लाभेन जीवभावरूपस्य जीवात्मस्वभावताम्नस्य कालेन कियतापि भवति परमा प्रकर्षवर्त्तिनी अप्रतिबद्धानुपहता सिद्धकाञ्चनता सिद्धभावस्वर्णता ॥ ८ ॥

कथं सिद्धकाञ्चनता भवतीत्याह ॥

**वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा । इतिकर्त्तव्यतयाऽतः सफलैषाप्यत्र भावविधौ ॥ ९ ॥**

य० वचनमागमः सोऽनल इव तस्य क्रिया स्वकीयव्यापारस्तस्या वचनानलक्रियातः । कर्म्मेन्धनदाहतो यतश्चैषा कर्म्मेन्धनस्य दाहस्ततो यतश्चैषा सिद्धकाञ्चनता भवति । नच वचनानलक्रियया कर्म्मेन्धनदाहमन्तरेण भावरसेन्द्रादेव सिद्धकाञ्चनता सम्पद्यते तस्माद्वचनानलक्रियापि कर्म्मेन्धनदाहनिमित्तभूता आश्रयणीया इतिकर्त्तव्यतया इन्धनप्रक्षेपकल्प-

शुभव्यापाररूपया वचनानलक्रियागतया प्रतिष्ठाया वचनक्रियारूपत्वादन्तर्गतत्त्वमतो हेतोः सफला [illegible], एषा। निम्बगता, प्रतिष्ठा। अत्र प्रक्रमे भावविधौ भवति अनेन भावप्रकारेमुख्यदेवताविषयस्य भावस्य हेतुत्त्वेन प्रसिद्धेरिति ॥९॥

उ० अयं केवलभावव्यापारस्तत्र शास्त्रादिव्यापारमाह। वचनेत्यादि। वचनमागम एवानलोऽग्निस्तस्य क्रिया नियतविधिव्यापाररूपा तस्याः सकाशात् कर्मेन्धनदाहतो यतश्चैषा सिद्धकाञ्चनता भवति नतु केवलभावरसेन्द्रादेवातोऽस्माच्छेतोरेषा बिम्बगता प्रतिष्ठाप्यत्र प्रक्रमे भावविधौ भावसहकारितायां वचनक्रियारूपत्वेनेन्धनप्रक्षेपकल्पशुभव्यापाररूपयेतिकर्त्तव्यतया सहिता सफला ॥ ९ ॥

सफलैषा प्रतिष्ठेत्युक्तं सा कथं कर्त्तुर्ज्ञायत इत्याह ॥

**एषा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति। प्रायो नानात्वं पुनरिह मन्त्रगतं बुधाः प्राहुः॥ १० ॥**

य० एषा च प्रतिष्ठा लोकसिद्धा पूर्वाचार्यसिद्धा पुरुषपारम्पर्यक्रमायाता। शिष्टजनापेक्षया विशिष्टभव्यापेक्षयाऽखिलैव सर्व्वैव लोकलोकोत्तरगता प्रायो बाहुल्येन नानात्वं विशेषः पुनरिह प्रक्रमे लोकोत्तरप्रतिष्ठायां मन्त्रगतं मन्त्रविषयं बुधा आचार्याः प्राहुर्ब्रुवते ॥ १० ॥

उ० इयं प्रतिष्ठा कथं ज्ञेयेत्याह। एषा चेत्यादि। एषा च प्रतिष्ठाऽखिलैव लोकलोकोत्तरगता सर्वैव शिष्टजनापेक्षया विशिष्टभव्यापेक्षया लोकसिद्धा पुरुषपारम्पर्यप्रतीता प्रायो बाहुल्येन नानात्वं विशेषः पुनरिह लोकोत्तरप्रतिष्ठायां मन्त्रगतं मन्त्रविषयं बुधाः प्राहुः ॥ १० ॥

नानात्वमेवाह ॥

**आवाहनादि सर्व्वं वायुकुमारादिगोचरं चात्र । सम्मार्जनादिसिद्ध्यै कर्त्तव्यं मन्त्रपूर्वं तु ॥ ११ ॥**

य० आवाहनादि सर्व्वं आवाहनपूजनस्वकर्म्मनियोगादि वायुकुमारादिगोचरं चात्र वायुमेघकुमारादिविषयं चात्र प्रतिष्ठायां । संमार्ज्जनादिसिद्ध्यै क्षेत्रसंशोधनाभिवर्षणादिनिष्पत्तये । कर्त्तव्यं मन्त्रपूर्व्वं तु । कुलक्रमायातमंत्रपूर्व्वकम् ११॥

उ० नानात्वमेवाह आवाहनेत्यादि । आवाहनपूजनस्वकर्मनियोगादि वायुकुमारादिगोचरं च वायुमेघकुमारादिविषयं चात्र प्रतिष्ठायां संमार्जनादीनां क्षेत्रसंशोधनाभिवर्षणादीनां सिद्ध्यै निष्पत्तये कर्त्तव्यं मन्त्रपूर्वं तु कुलक्रमायातमन्त्रपुरस्सरमेव ॥ ११ ॥

कथं पुनः सा प्रतिष्ठा कर्त्तव्येत्याह ॥

**न्याससमये तु सम्यक्सिद्धानुस्मरणपूर्वकमसंगम् । सिद्धौ तत्स्थापनमिव कर्त्तव्यं स्थापनं मनसा॥१२॥**

य०न्याससमये तु मन्त्रन्यासकाले सम्यगवैपरीत्येन सिद्धानुस्मरणपूर्व्वकं परमपदस्थसिद्धानुस्मृतिमूलमसङ्गं शारीरमानससङ्गरहितमत्यन्तोपयुक्ततया मुक्तौ परमपदे तत्स्थापनमिव सिद्धस्थापनमिव केवलदर्शनादिचिच्छक्तिसमन्वितं कर्त्तव्यं विधेयं स्थापनं प्रतिष्ठा मनसान्तःकरणेन भूयान् भावव्यापार एवायमिति कृत्वा ॥ १२ ॥

उ० न्यासेत्यादि । न्याससमये तु मन्त्रन्यासकाले तु सम्यगवैपरीत्येन सिद्धानुस्मरणपूर्वकं मुक्तात्मस्मरणपूर्वं असंगं

शारीरमानससङ्गरहितं मुक्तौ परमपदे तस्य केवलज्ञानादिचिच्छक्तिसमन्वितस्य स्थापनमिव कर्त्तव्यं स्थापनं प्रतिमाया मनसा प्रतिष्ठाविधिशुद्धेनान्तःकरणेन भावोन्नयनव्यापारोऽयमेवेति कृत्वा ॥ १२ ॥

ननु च येयं निजभावस्य देवतोद्देशेन प्रतिष्ठा सा किमुच्यत इत्याह ॥

**वीजन्यासः सोऽयं मुक्तौ भावविनिवेशतः परमः । सकलावञ्चकयोगप्राप्तिफलोऽभ्युदयसचिवश्च॥१३॥**

य० वीजन्यासः सोऽयं । वीजस्य पुण्यानुवन्धिपुण्यस्य सम्यक्त्वस्य वा न्यासो निक्षेपोऽयं वर्त्तते येयं प्रतिष्ठानाम कथं वीजन्यास इत्याह । मुक्तौ सिद्धौ भावविनिवेशतः सदन्तःकरणविनिवेशात्परमः प्रधानः सकलानामवञ्चकयोगानां प्राप्तिः फलमस्य वीजन्यासस्य स तथा । अभ्युदयसचिवश्चाभ्युदयसहायश्च अवञ्चकयोगाश्च त्रयः । तद्यथा । सद्योगावञ्चकः क्रियावञ्चकः फलावञ्चकस्ततस्वरूपं चेदं"सद्भिः कल्याणसंपन्नैर्दर्शनादपि पावनैः । तथादर्शनतो योग आद्यावञ्चक उच्यते ॥ १ ॥ तेषामेव प्रणामादिक्रियानियम इत्यलं । क्रियाऽवञ्चकयोगः स्यान्महापापक्षयोदयः ॥ २ ॥ फलावञ्चकयोगस्तु सद्भ्य एव नियोगतः । सानुवन्धफलावाप्तिर्धर्म्मसिद्धौ सतां मता ॥ ३ ॥" ॥ १३ ॥

उ० सेयं प्रतिष्ठा किमुच्यत इत्याह बीजेत्यादि । सोऽयं वीजस्य पुण्यानुवन्धिपुण्यस्य सम्यक्त्वस्य वा न्यासो निक्षेपः येयं प्रतिष्ठानाम कुत इत्याह मुक्तौ सिद्धौ भावविनिवेशतः चित्तप्रतिवन्धात् कीदृशोऽयं परमः प्रधानः तथा सकलानामनवञ्चकयोगानां प्राप्तिः फलं यस्य स तथाऽभ्युदयसचिवश्चाभ्युदयसहायश्चावञ्चकयोगाश्च त्रयः सद्योगावञ्चकः फलावञ्चकः क्रियाऽवञ्चकश्च । तत्स्वरूपं चेदं"सद्भिः कल्याणसंपन्नैर्दर्शनादपि पावनैः । तथादर्शनतो योग आद्यावञ्चक उच्यते

॥ १ ॥ तेषामेव प्रणामादिक्रियानियम इत्यलं । क्रियाऽवञ्चकयोगः स्यान्महापापक्षयोदयः ॥ २ ॥ फलावञ्चकयोगस्तु सद्भ्य एव नियोगतः । सानुबन्धफलावाप्तिर्द्धर्मसिद्धौ सतां मतेति ॥ ३ ॥ योगदृष्टिसमुच्चये ॥ १३ ॥

बीजन्यास इत्युक्तमयं च संवर्द्धनीय इत्याह ॥

लवमात्रमयं नियमादुचितोचितभाववृद्धिकरणेन । क्षान्त्यादियुतैर्मैत्र्यादिसंगतैर्बृंहणीय इति ॥ १४ ॥

य० लवमात्रं स्तोकमात्रमयं प्रतिष्ठागतो भावो नियमान्नियमेन उचितोचितभाववृद्धिकरणेन उचितोचिता चासौ देशकालाद्यनुरूपा भाववृद्धिश्च तत्सम्पादनेन क्षान्त्यादियुतैः क्षमामार्दवार्जवसन्तोषसमन्वितैः मैत्र्यादिसङ्गतैः मैत्रीकरुणामुदितोपेक्षासहितैर्बृंहणीय इति संवर्द्धनीय इत्येवमुक्तन्यायेन ॥ १४ ॥

उ० अयं च बीजन्यास उपायेन संवर्द्धनीय इत्याह । लवेत्यादि । लवमात्रं अपिर्गम्यः स्तोकमात्रमपि यथा स्यात्तथा किं पुनरधिकमात्रमित्यर्थः । अयं प्रतिष्ठागतो भावो नियमान्निश्चयेनोचितोचिता चासौ देशकालाद्यनुरूपा भाववृद्धिश्च तत्संपादनेन क्षान्त्यादियुतैः क्षमामार्दवार्जवसंतोषसमन्वितैर्मैत्र्यादिसङ्गतैर्मैत्रीकरुणामुदितोपेक्षासहितैर्बृंहणीयो वर्द्धनीय इत्युक्तन्यायेन ॥ १४ ॥

अयं संवर्द्धनीय इत्युक्तं स एव विशिष्य स्तूयते ॥

निरपायः सिद्धार्थः स्वात्मस्थो मन्त्रराडसङ्गश्च । आनन्दो ब्रह्मरसश्चिन्त्यस्तत्त्वज्ञमुष्टिरियम् ॥ १५ ॥

य० अपायेभ्यो निर्गतो निरपायः । सिद्धा अर्था अस्मिन्निति सिद्धार्थः । स्वात्मनि तिष्ठतीति स्वात्मस्थो न परस्थो

मन्त्रराट् मन्त्रराजोऽयं असङ्गश्च सङ्गविकल आनन्दस्तद्धेतुत्वात् ब्रह्मरसो ब्रह्म सत्यं तपो ज्ञानं तद्विषयो ... चिन्त्यः चिन्तनीयस्तत्त्वज्ञमुष्टिरियं तत्त्वज्ञानां मुष्टिर्हितोपदेशो अविसंवादस्थानं एवं प्रतिष्ठागतो भावः संस्तुत इति ॥१५॥

उ० अयमेव विशिष्य स्तूयते । निरपाय इत्यादि । अपायेभ्यो निर्गतो निरपायः सिद्धा अर्था अस्मिन्निति सिद्धार्थः स्वात्मनि तिष्ठतीति स्वात्मस्थः स्वाभाविकगुणरूपत्वेनाल्पस्यापि वलीयस्त्वादौपाधिकप्रवलकर्मनाशक इति भावः । मन्त्रराट् मन्त्रराजः परममननत्राणगुणवत्त्वादसङ्गश्च सङ्गरहितश्चानन्दस्तद्धेतुत्वात् ब्रह्म सत्यतपोज्ञानरूपं तस्य रस आस्वादश्चिन्त्यश्चिन्तनीयस्तत्त्वज्ञानां मुष्टिरल्पेन वहुहितसङ्गोऽयं प्रतिष्ठागतो भावः ॥ १५ ॥

एवं प्रतिष्ठाविधिंपरिसमाप्य तच्छेपमाह ॥

**अष्टौ दिवसान् यावत् पूजाऽविच्छेदतोऽस्य कर्त्तव्या । दानं च यथाविभवं दातव्यं सर्वसत्त्वेभ्यः ॥१६॥८॥**

य० अष्टौ दिवसान्यावत् अष्टदिनानि मर्यादया पूजा पुष्पवलिविधानादिभिरविच्छेदतोऽविच्छेदेनास्य विम्वस्य कर्त्तव्या करणीया । दानं तु यथा(विभवं)विभवानुसारेण दातव्यं सर्व्वसत्त्वेभ्यः शासनोन्नतिनिमित्तम् ॥ १६ ॥

उ० एवं प्रतिष्ठाविधिं परिसमाप्य तच्छेपमाह । अष्टावित्यादि । अष्टौ दिवसान् यावदविच्छेदेन नैरन्तर्येण पूजा पुष्पवलिविधानादिभिरस्य विम्वस्य कर्त्तव्या दानं च यथाविभवं विभवानुसारेण दातव्यं सर्वसत्त्वेभ्यः शासनोन्नतिनिमित्तम्१६

॥ इत्यष्टमं पोडशकम् ॥

पूजा अविच्छेदतो अस्य कर्त्तव्येत्युक्तं सैव स्वरूपतोऽभिधीयते कारिकाद्वयेन ॥

स्नानविलेपनसुसुगन्धिपुष्पधूपादिभिः शुभैः कान्तम् । विभवानुसारतो यत्काले नियतं विधानेन ॥ १ ॥
अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान् । पूज्यो हितकामानामितिभक्त्या पूजनं पूजा ॥ २ ॥

य० स्नानं गन्धद्रव्यसंयोजितं स्नात्रं वा विलेपनं चन्दनकुङ्कुमादिभिः सुष्ठु सुगन्धि पुष्पाणि जात्यादिकुसुमानि । तथा सुगन्धिधूपो गन्धयुक्तिप्रतीतस्तदादिभिरपरैरपि शुभैर्गन्धद्रव्यविशेषैः कान्तं मनोहारि विभवानुसारतो विभवानुसारेण यत्पूजनमितिसंबन्धः काले त्रिसन्ध्यं स्ववृत्त्यविरुद्धे वा नियतं सदा विधानेन शास्त्रोक्तेन ॥ १ ॥ उपकृतमुपकारो न विद्यते उपकृतं येषां त इमेऽनुपकृता अकृतोपकारा इत्यर्थः । ते च ते परे च तेभ्यो हितं तस्मिन्रतोऽभिरतः प्रवृत्तोऽनुपकृतपरहितरतो निष्कारणवत्सलः शिवं ददातीति शिवदस्त्रिदशानामीशास्तैः पूजितो भगवान् समग्रैश्वर्यादिसंपन्नः पूज्यः पूजनीयो हितकामानां हिताभिलाषिणां सत्त्वानामित्येवंविधेन कुशलपरिणामेन भक्त्या विनयसेवया पूजनं पूजोच्यते ॥ २ ॥

उ० पूजाविच्छेदतोऽस्य कर्त्तव्येत्युक्तं । सैव स्वरूपतोऽभिधीयते । स्नानेत्यादिकारिकायुग्मेन । स्नानं गन्धद्रव्यसंयोजितं स्नात्रं विलेपनं चन्दनकुंकुमादिभिः सुष्ठु सुगन्धिपुष्पाणि जात्यादीनि सुगन्धिधूपः काकतुण्डादि तदादिभिरपरैरपि शुभैर्गन्धद्रव्यविशेषैः कान्तं मनोहारि विभवानुसारतः संपदनुसारेण यत्पूजनमित्यग्रे संबन्धः काले त्रिसन्ध्यं स्ववृत्त्यविरुद्धे वा काले नियतं सदा विधानेन शास्त्रोक्तेन ॥ १ ॥ न विद्यते उपकृतमुपकारो येभ्यस्ते च ते परे च तेभ्यो हितं तस्मिन् रतः अनुपकृत उपकारफलाभागी सन् परहितरत इति वा निःकारणवत्सल इत्यर्थः । शिवदो मोक्षार्पकः त्रिदशे-

शैरिन्द्रैः पूजितो भगवान् समग्रैश्वर्यादिसंपन्नः पूज्यः पूजनीयो हितकामानां हितार्थिनां प्राणिनामित्येवंविधकुशलपरिणामरूपया भक्त्या यत्पूजनं सा पूजोच्यते ॥ २ ॥

तामेनभेदेनाह ॥

पञ्चोपचारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात् । ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ३ ॥

य० पञ्चोपचारयुक्ता पञ्चाङ्गप्रणिपातरूपा काचिच्चाष्टोपचारयुक्ता स्यात् अष्टाङ्गप्रणिपातरूपा ऋद्धिविशेषादन्या ऋद्धिविशेषो दशार्णभद्रादिगतस्तस्मादपरा प्रोक्ता सर्व्वोपचारेति सर्व्वैः प्रकारैरन्तःपुरहस्त्यश्वरथादिभिरुपचारो विनयो यस्यां सा सर्व्वोपचारा तत्राद्या"दो जाणू दो ण्णि करा पंचमयं होइ उत्तमङ्गं तु" । एवमेभिः पञ्चभिरुपचारयुक्ताऽथवा आगमोक्तैः पञ्चभिर्विनयस्थानैर्युक्ता तद्यथा । "सच्चित्ताणं दव्वाणं विउसरणयाए अचित्ताणं दव्वाणं अविउसरणाए । एगसाडिएणं उत्तरासङ्गेण । चक्खुफासे अञ्जलिपग्गहेणं मणसा एगत्तीभावकरणेणं । द्वितीया त्वष्टभिरंगैः शरीरावयवैरुपचारो यस्यां । तानि चामून्यङ्गानि । "सीसमुरोयरपिठी दो बाहू ऊरुयाय अट्ठंगा" तृतीया तु देवेन्द्रन्यायेन यथोक्तमागमे"सव्वबलेणं सव्वसमुदएणं सव्वविभूइए सव्वविभूसाए सव्वायरेणेत्यादि ॥ ३ ॥

उ० तामेव भेदेनाह । पञ्चेत्यादि । एका पञ्चोपचारयुक्ता पञ्चभिर्जानुद्वयकरद्वयोत्तमाङ्गलक्षणैरुपचारैर्युक्तेतिकृत्वा पञ्चभिरुपचारैरभिगमैर्युक्तेति वा कृत्वा । काचिदष्टोपचारयुक्ताऽष्टभिरङ्गैः शीर्षोरउदरपृष्ठबाहुद्वयोरुद्वयलक्षणैरुपचारो-

ऽस्यामिति हेतोः । अन्या ऋद्धिविशेषाद्दशार्णभद्रादिन्यायेन सर्वोपचारा सर्वैः प्रकारैरन्तःपुरहस्त्यश्वरथादिभिः सव्वबलेणं सव्वसमुदएणं सव्वविभूसाए सव्वायरेणेत्याद्यागमादुपचारो विनयोऽस्यामिति कृत्वा ॥ ३ ॥

इयं च यादृशेन वित्तेन कार्या पुरुषेण च तदाह ॥

**न्यायार्ज्जितेन परिशोधितेन वित्तेन निरवशेषेयम् । कर्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन ॥ ४ ॥**

य० न्यायार्ज्जितेन न्यायोपात्तेन परिशोधितेन भावविशेषात् । वित्तेन द्रव्येण निरवशेषा सकलेयं पूजा कर्त्तव्या करणीया । बुद्धिमता प्रज्ञावता । प्रयुक्तसत्सिद्धियोगेन प्रयुक्तः वर्त्तितः सत्सिद्धियोगः सत्साधनव्यापारो येन स तथा ॥ ४ ॥

उ० इयं च यथा येन कार्या तथाह । न्यायेत्यादि । न्यायेनार्ज्जितेन ततः परिशोधितेन भावविशेषाद्वित्तेन धनेन निरवशेषा सकलेयं पूजा कर्त्तव्या बुद्धिमता प्रयुक्तः सत्सिद्धियोगः सत्साधनव्यापारो येन स तथा तेन ॥ ४ ॥

कीदृक्प्रयत्नेन पुनः पुंसा करणीयेयमित्याह ॥

**शुचिनात्मसंयमपरं सितशुभवस्त्रेण वचनसारेण । आशंसारहितेन च तथा तथा भाववृद्ध्योच्चैः ॥५॥**

य० शुचिना द्रव्यतः स्नानेन देशसर्व्वस्नानाभ्यां देशस्नानं हस्तपादमुखप्रक्षालनं सर्व्वस्नानं शिरसा स्नानत्वे सत्यागमप्रसिद्ध्या भावतः शुचिना भावस्नानेन विशुद्धाध्यवसायेनेत्यर्थः । आत्मसंयमपरं आत्मनः शरीरस्य संयमः संवृताङ्गोपाङ्गेन्द्रियत्वं तत्परं तत्प्रधानं यथा भवत्येवं पूजा कर्त्तव्या सितशुभवस्त्रेण सितवस्त्रेण शुभवस्त्रेण च । शुभमिह सिताद-

न्यदपि पट्टयुग्मादि रक्तपीतादिवर्ण परिगृह्यते वचनसारेणागमप्रधानेन आशंसारहितेन च इहपरलोकाद्याशंसाविकलेन च। तथातथाभाववृद्ध्योच्चैः येन येन प्रकारेण पुष्पवस्त्रादिविरचनागतेन भाववृद्धिः संपद्यते तेन तेन प्रकारेणेत्यर्थः ॥५॥

उ० शुचिनेत्यादि। शुचिना हस्तपादमुखप्रक्षालनशिरःस्नानरूपदेशसर्वभेदभिन्नद्रव्यस्नानेन शुद्धाध्यवसायरूपभावस्नानेन च पवित्रेणात्मनः शरीरस्य संयमः संवृताङ्गोपाङ्गेन्द्रियत्वं तत्परं तत्प्रधानं यथाभवत्येवं पूजा कर्त्तव्या सितं सितमुज्वलं शुभं शोभनं च वस्त्रं यस्य स तथा तेन शुभमिह सितादन्यदपि पट्टयुग्मादि रक्तपीतादिवर्ण गृह्यते वचनसारेणागमप्रधानेनाशंसयेहपरलोकफलवाञ्छया रहितेन च तथा तथा तेन तेन पुष्पवस्त्रादिविरचनाप्रकारेण भाववृद्ध्योच्चैरतिशयेन५॥

प्रतिष्ठानन्तरं पूजा प्रस्तुता सा च पुष्पामिषस्तोत्रादिभेदेन बहुधा तत्र पुष्पादिपूजामभिधाय, स्तोत्रपूजां कारिकाद्वयेनाह ॥

**पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः। आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ ६ ॥**
**पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः। अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥७॥**

य० पिण्डं शरीरमष्टोत्तरलक्षणसहस्रलक्षितं क्रिया समाचारश्चरितं तच्च सर्व्वातिशायि दुर्व्वारपरीषहोपसर्गसमुत्थभयविजयित्वेन गुणाः श्रद्धाज्ञानविरतिपरिणामादयो जीवस्य सहवर्त्तिनो अविनाभूताः सामान्येन केवलज्ञानदर्शनादयस्तु विशेषेण। तद्गतैस्तद्विषयैस्तत्प्रतिवद्धैर्गम्भीरैः सूक्ष्ममतिविषयभावाभिधायिभिरन्तर्भावप्रवर्त्तितैश्च विविधवर्णसंयुक्तैर्विचि-

त्राक्षरसंयोगैश्छन्दोऽलङ्कारवशेन । आशयविशुद्धिजनकैर्भावविशुद्ध्यापादकैः संवेगपरायणैः संवेगः संसारभयं मोक्षाभिलाषो वा । परमयनं गमनं येषु तानि परायणानि संवेगे परायणानि संवेगपरायणानि तैः पुण्यहेतुत्त्वात्पुण्यानि तैः ॥ ६ ॥ पापानां रागद्वेषमोहकृतानां स्वयंकृतत्त्वेन निवेदनं परिकथनं तद्गर्भो हृदयमन्तर्गतभावो येषां तानि तैः पापनिवेदनगर्भैः प्रणिधानमैकाग्र्यं तत्पुरस्सरैरुपयोगप्रधानैरितियावत् । विचित्रार्थैर्बहुविधार्थैः । अस्खलितादिगुणयुतैरस्खलितममिलितमव्यत्याम्रेडितमित्यादिगुणयुक्तैरभिव्याहारमाश्रित्य स्तोत्रैश्च स्तुतिविशेषैश्च महामतिग्रथितैर्म्महाबुद्धिपुरुषविरचितसन्दर्भैरियं पूजा कर्त्तव्येति पश्चात्सम्बन्धनीयं ॥ ७ ॥

उ० इयमधिकृता पूजा पुष्पामिषस्तोत्रादिभेदेन बहुविधा तत्र पुष्पादिपूजामभिधाय स्तोत्रपूजां कारिकाद्वयेनाह । पिण्डेत्यादि । पापेत्यादि । पिण्डः शरीरमष्टोत्तरलक्षणसहस्रलक्षितं क्रिया सर्व्वातिशायिदुर्वारपरीषहजयाद्याचाररूपा गुणा जीवस्वभावाविनाभूताः सामान्येन ज्ञानादयो विशेषेण केवलज्ञानादयस्तद्गतैस्तद्विषयैः गम्भीरैः सूक्ष्ममतिगम्यार्थैर्निविधाश्छन्दोऽलङ्कारभङ्ग्या विचित्रा ये वर्णास्तैः संयुक्तैराशयविशुद्धेर्नवमरसाभिव्यञ्जनया चित्तशुद्धेर्जनकैः संवेगो भवभयं मोक्षाभिलाषो वा परमयनं गमनं येषु तानि तथा तैः पुण्यहेतुत्त्वात् पुण्यैः ॥ ६ ॥ पापानां रागद्वेषमोहकृतानां, स्वयंकृतत्त्वेन निवेदनं गर्भोऽन्तर्गतभावो येषां तानि तथा तैः प्रणिधानमैकाग्र्यं तत्पुरस्सरैरुपयोगप्रधानैरितियावद्विचित्रार्थैर्बहुविधार्थयुक्तैरस्खलितादयो गुणा अस्खलितामिलिताव्यत्याम्रेडितादिलक्षणास्तैर्युतैरभिव्याहारकाले स्तोत्रैश्च महामतिभिर्विशिष्टबुद्धिभिर्ग्रथितैरियं पूजा कर्त्तव्येति पश्चात्सम्बन्धनीयं ॥ ७ ॥

य० कायादयो योगाः कायादीनां वा तत्सारा तत्प्रधाना त्रिविधा त्रिप्रकारा पूजा काययोगसारा वाग्योगसारा मनोयोगसारा च । तच्छुद्ध्युपात्तवित्तेन तेषां कायादियोगानां शुद्धिः कायादिदोषपरिहारस्तयोपात्तं यद्वित्तं तेन करणभूतेन । या तदतिचाररहिता शुद्ध्यतिचारविकला सा परमा प्रधाना पूजा अन्ये तु समयविदः अपरे त्वाचार्याः इत्थमभिदधति ॥९॥

उ० अथान्यथा पूजाभेदत्रयमाह। कायेत्यादि। कायादयो ये योगास्तत्सारा तत्प्रधाना त्रिविधा त्रिप्रकारा काययोगसारा वाग्योगसारा मनोयोगसारा च तेषां कायादियोगानां शुद्धिः कायादिदोषपरिहारपूर्वैकाग्रप्रवृत्तिस्तयोपात्तं यद्वित्तं तेन करणभूतेन या तदतिचारैः शुद्ध्यतिचारै रहिता सा परमा प्रधाना पूजाऽन्ये तु समयविद आगमज्ञा इति वदन्तीति शेषः ॥ ९ ॥

कायादियोगसारा त्रिविधा पूजेत्युक्तं तदेव त्रैविध्यमाह ॥

**विघ्नोपशमन्याद्या गीताभ्युदयप्रसाधनी चान्या। निर्व्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः ॥१०॥**

य० विघ्नानुपशमयतीति विघ्नोपशमनी आद्या काययोगसारा गीता कथिता, अभ्युदयं प्रसाधयतीत्यभ्युदयप्रसाधनी चान्याऽपरा वाग्योगप्रधाना, निर्व्वाणं साधयतीति निर्वाणसाधनीति च मनोयोगसारा, स्वतन्त्रा वा त्रिविधा फलदा तु फलदैवैकैका यथार्थसंज्ञाभिरन्वर्थाभिधानैः ॥ १० ॥

उ० तिसृणामप्येतासामन्वर्थनामभेदमाह । विघ्नेत्यादि । विघ्नानुपशमयतीति विघ्नोपशमन्याद्या काययोगसारा गीता कथिताऽभ्युदयं प्रसाधयतीत्यभ्युदयप्रसाधनी चान्याऽपरा वाग्योगप्रधाना निर्व्वाणं साधयतीति च मनोयोगसारा फलदा तु सैवैकैका यथार्थसंज्ञाभिरन्वर्थाभिधानैरेतासां समन्तभद्रा सर्व्वमङ्गला सर्वसिद्धिफलेत्येतान्यप्यन्वर्थनामानि गी-

यन्ते। तथेह प्रथमा प्रथमावञ्चकयोगात्सम्यग्दृष्टेर्भवति द्वितीया तु द्वितीयावञ्चकयोगादुत्तरगुणधारिणस्तृतीया च तृतीयावञ्चकयोगात्परमश्रावकस्यैव प्रथमकरणभेदेन ग्रन्थ्यासन्नस्य च धर्ममात्रफलैवेयं सद्योगादिभावादनुबन्धासिद्धेश्चेत्ययं पूजाविंशिकायां विशेषः ॥ १० ॥

तिसृष्वपि यद्भवति तदाह ॥

प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता। आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम्॥११

त्रैलोक्यसुन्दरं यन्मनसापादयति तत्तु चरमायाम्। अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः॥१२॥

य० प्रवरं प्रधानं पुष्पादि पुष्पगन्धमाल्यादि सदा च सर्व्वदैवाद्यायां प्रथमायां सेवते तु सेवत एव ददात्येव तद्दाता तस्याः पूजायाः कर्त्ता दाता आनयति च वचनेनान्यतोऽपि हि क्षेत्रान्तरात्प्रस्तुतं पुष्पादि नियमादेव नियमेनैव द्वितीयायां पूजायां॥११॥ त्रैलोक्यसुन्दरं त्रिषु लोकेषु प्रधानं यत्पारिजातकुसुमादि नन्दनादिवनगतं मनसान्तःकरणेनापादयति सम्पादयति तत्तु तदेव चरमायां निर्व्वाणसाधन्यां तद्दातेत्यत्राप्यभिसम्बध्यतेऽयमेव विशिष्यते अखिलैर्गुणैरधिकं सद्योगानां सद्धर्म्मव्यापाराणां सारं फलकल्पमजरामरत्त्वेन धर्म्मस्य सारोऽमरत्त्वमिति तत्त्वं सद्योगसारं यत्सद्ब्रह्म परमात्मस्वरूपं तस्य यागो यजनं पूजनं तत्परस्तत्प्रधानः प्रस्तुतस्तद्दाताऽखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपर उच्यते ॥ १२ ॥

उ० तिसृष्वपि यद्भवति तदाह। प्रवरमित्यादि। प्रवरं प्रधानं पुष्पादि पुष्पगन्धमाल्यादि सदा च सर्वदैवाद्यायां प्रथमपूजायां सेवते तु सेवत एव स्वहस्तेन ददात्येवेत्यर्थः। तद्दाता तत्पूजाकर्त्ता। आनयति च वचनेनान्यतोऽपि हि

क्षेत्रान्तरात् प्रस्तुतं पुष्पादि नियमादेव द्वितीयायां पूजायाम् ॥ ११ ॥ त्रैलोक्येत्यादि । त्रैलोक्ये त्रिषु लोकेषु प्रधानं सुन्दरं यत्पारिजातकुसुमादि नन्दनवनगतं तत्तु तदेव मनसान्तःकरणेनापादयत्युपनयति चरमायां निर्व्वाणसाधन्यां तद्दातेत्यत्राप्यभिसम्बन्ध्यतेऽयमेव विशिष्यतेऽखिलैर्गुणैरधिकं सद्योगानां सद्धर्मव्यापाराणां सारं फलकल्पमजरामरत्वेन हेतुना यत् सद्ब्रह्म परमात्मस्वरूपं तस्य यागो यजनं पूजनं तत्परस्तदेकदत्तबुद्धिः अखिलगुणाधिकस्य हि पूजाऽखिलगुणाधिकं पूजोपकरणं मनसि निधायातिशयितपरितोषाय बुद्धिमता विधेयेत्यर्थः ॥ १२ ॥

प्रतिष्ठानन्तरं स्नानादि चिकीर्षितं तत्र जीवकायवधमाशङ्क्याह ॥

स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि। कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः१३

य० स्नानादौ स्नानविलेपनसुगन्धिपुष्पादौ पूर्व्वोक्ते कायवधो जलवनस्पत्यादिवधः परिदृष्टरूप एव न चोपकारः सुखानुभवरूपस्तदनुभोगेन जिनस्य वीतरागस्य मुक्तिव्यवस्थितस्य कश्चिदपि कोऽपि कृतकृत्यश्च निष्ठितार्थश्च स भगवान्न किञ्चित्तस्य करणीयमस्त्यपरैरेवं व्यर्था पूजा निरर्थिका पूजेत्येवं मुग्धमतिरव्युत्पन्नमतिर्मूढमतिर्व्वा पर्यनुयुङ्क्ते ॥१३॥

उ० अत्र पूजायां स्नानादिगतं पूर्वपक्षमुद्भावयति । स्नानादावित्यादि । स्नानादौ स्नानविलेपनसुगन्धिपुष्पादौ पूर्वोक्ते कायवधो जलवनस्पत्यादिवधः स्पष्ट एव भवति सच प्रतिषिद्धः न चोपकारः सुखानुभवरूपो जिनस्य वीतरागस्य मुक्तिव्यवस्थितस्य ततः स्नानाद्यविनाभाविकायवधात् कश्चिदपि भवति । कृतकृत्यश्च निष्ठितार्थश्च स भगवान्न किञ्चित्तस्य करणीयमस्मदादिभिरस्ति तस्माद्व्यर्था निष्प्रयोजना पूजेत्येवं मूढमतिरव्युत्पन्नबुद्धिः पर्यनुयुङ्क्ते ॥ १३ ॥

परिहृतः । ततस्तस्याः पूजायाः सकाशात्तदनुपकारेऽपि मन्त्रादेरिव च मन्त्राग्निविद्यादेरिव च फलभावः फलोत्पादः यथा स्मर्यमाणमन्त्रसेव्यमानज्वलनाभ्यस्यमानविद्यादेरनुपकारेऽपि मन्त्रादीनां तत्स्वाभाव्याद्विषशीतापहारविद्यासिद्ध्यादिरूपफलभावस्तथा जिनपूजनतो जिनानामनुपकारेऽपि पूजकस्य तत्स्वाभाव्याद्विशिष्टपुण्यलाभरूपफलभाव एतेन न चोपकारो जिनस्येतिदोषः परिहृतः ॥१४॥ कृतकृत्यत्वादेव च सिद्धार्थत्वादेव च तत्पूजा देवपूजा फलवती सफला गुणोत्कर्षा दुत्कृष्टगुणविषयत्वादनेन चरमदोषो निरस्तः। निगमयति तस्मादव्यर्था सप्रयोजनैषा पूजाऽन्यत्रशरीरस्वजननिकेतनादावारम्भवत इति विमलधियो निर्मलबुद्धयो ब्रुवते। नन्वन्यत्रारम्भवतोऽत्राधिकार इति कोऽयं नियमो जिनपूजनस्य कूपोदाहरणेन स्वजनितारम्भदोषविशोधनपूर्वकगुणान्तरासादकत्वे यतेरप्यधिकारप्रसङ्गात्, सावद्यत्वे चान्यत्रारम्भवतोऽप्यनधिकारप्रसङ्गान्नहि कुटुम्बाद्यर्थं गृही सावद्ये प्रवर्त्तत इति धर्म्मार्थमपि तेन तत्र प्रवर्त्तितव्यं, यतो नैकं पापमाचरितमित्यन्यदप्याचरितव्यमिति। अत्रोच्यतेऽन्यत्रारम्भवतोऽसदारम्भस्य सतो नाशाय सदारंभे जिनपूजादावधिकारित्वं अनुबन्धाहिंसारूपात्ततस्तस्य तन्नाशसम्भवात् यतेस्तु सदा सर्वारम्भनिवृत्तत्वान्न तत्राधिकारः । प्रक्षालनाद्धीत्यादिन्यायात्तस्मादसदारम्भनिवृत्तिकामनावानिहाधिकारीति न कश्चिद्दोषः । कूपोदाहरणेनापि प्रवर्त्तमानस्य साधोस्तत्रावद्यमेव चित्ते स्फुरति उत्कृष्टगुणारूढत्वान्नतु गृहिणोऽतथात्त्वादिति कर्त्तृपरिणामवशादधिकारानधिकारौ, अत एव सामायिकस्थस्य गृहिणोऽपि तत्रानधिकारोऽन्यस्यापि पृथिव्याद्युपमर्दभीरोर्यतनावतः सावद्यसङ्क्षेपरुचेर्यतिक्रियानुरागिणो न धर्मार्थं सावद्यप्रवृत्तिर्युक्तेत्यप्याहुरिति कृतं विस्तरेण ॥ १५ ॥

एवं सचोद्यपरिहारां पूजामभिधाय फलद्वारेण निगमयन्नाह ॥

इति जिनपूजां धन्यः शृण्वन् कुर्वंस्तदोचितां नियमात्। भवविरहकारणं खलु सदनुष्ठानं द्रुतं लभते ॥१६॥

य० इत्येवमुक्तनीत्या जिनपूजां देवपूजां धन्यः पुण्यभाक् शृण्वन्नर्थतः कुर्व्वन् क्रियया । तदा तस्मिन्काले उचितां योग्यां नियमान्नियमेन भवविरहकारणं खलु भवविगमनिमित्तमेव सदनुष्ठानं शोभनानुष्ठानं द्रुतमाश्वेव लभते अवाप्नोतीति ॥ १६ ॥

उ० एवं सचोद्यपरिहारां पूजामभिधाय फलद्वारेण निगमयन्नाह । इतीत्यादि । इत्येवं जिनपूजां धन्यो धर्मधनः शृण्वन्नर्थतः कुर्वन् क्रियया तदा तस्मिन्काले उचितां यो नियमान्निश्चयेन भवविरहकारणं सदनुष्ठानं शोभनानुष्ठानं द्रुतं खलु । शीघ्रमेव लभते ॥ १६ ॥

॥ इति नवमं षोडशकम् ॥

सदनुष्ठानं लभत इत्युक्तं तदाह ॥

सदनुष्ठानमतः खलु बीजन्यासात्प्रशान्तवाहितया । सञ्जायते नियोगात्पुंसां पुण्योदयसहायम् ॥ १ ॥

य० सदनुष्ठानं प्रागुक्तमतः खलु बीजन्यासादस्मात्पुण्यानुबन्धिपुण्यनिक्षेपात् । प्रशान्तवाहितया प्रशान्तं वोढुं शीलं यस्य तत्प्रशान्तवाहि तद्भावस्तया चित्तसंस्काररूपया सञ्जायते निष्पद्यते नियोगान्नियमेन पुंसां मनुष्याणां पुण्योदयसहायं पुण्यानुभावसहितम् ॥ १ ॥

उ० सदनुष्ठानं लभत इत्युक्तं तत्स्वरूपमेवाह । सदनुष्ठानमित्यादि । सदनुष्ठानमतः खलु उचितक्रमजनितादेव बीजन्यासात्पुण्यानुबन्धिपुण्यनिक्षेपात् प्रशान्तं वोढुं शीलं यस्य तद्भावस्त चित्तसंस्काररूपया सञ्जायते निष्पद्यते नियोगादभ्यासात् पुंसां मनुष्याणां पुण्योदयसहायं पुण्यानुभावसहकृतम् ॥ १ ॥

तदेव भेदद्वारेणाह ॥

**तत्प्रीतिभक्तिवचनासङ्गोपपदं चतुर्विधं गीतम् । तत्त्वाभिज्ञैः परमपदसाधनं सर्वमेवैतत् ॥ २ ॥**

य० तत्सदनुष्ठानं प्रीतिश्च भक्तिश्च वचनं चासङ्गश्चैते शब्दा उपपदमुपोच्चारिपदं यस्य सदनुष्ठानस्य तत्तथा चतुर्विधं चतुर्भेदं गीतं शब्दितं प्रीत्यनुष्ठानं भक्त्यनुष्ठानं वचनानुष्ठानमसङ्गानुष्ठानं तत्त्वाभिज्ञैः स्वरूपाभिज्ञैः परमपदसाधनं मोक्षसाधनं सर्व्वमेवैतच्चतुर्व्विधम् ॥ २ ॥

उ० तदेव भेदत आह । तदित्यादि । तत्सदनुष्ठानं प्रीतिभक्तिवचनासङ्गा एते शब्दा उपपदानि पूर्वपदानि यस्य तत्तथा चतुर्विधं गीतं शब्दितं तत्त्वाभिज्ञैस्तत्त्वविद्भिः परमपदस्य मोक्षस्य साधनं सर्वमेवैतच्चतुर्विधं प्रीत्यनुष्ठानं भक्त्यनुष्ठानं वचनानुष्ठानमसङ्गानुष्ठानं च ॥ २ ॥

तत्राद्यरूपमाह ॥

**यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति कर्त्तुः । शेषत्यागेन करोति यच्च तत्प्रीत्यनुष्ठानम् ॥३॥**

य० यत्रानुष्ठाने आदरः प्रयत्नातिशयोऽस्ति परमप्रीतिश्चाभिरुचिरूपा । हितोदया हित उदयो यस्याः सा तथा भ-

वति । कर्तुरनुष्ठातुः शेपत्यागेन शेपप्रयोजनत्यागेन तत्काले करोति यच्चातीव धर्म्मादरात् । तदेवंभूतं प्रीत्यनुष्ठानं विज्ञेयम् ॥ ३ ॥

उ० तत्राद्यस्वरूपमाह । यत्रेत्यादि । यत्रानुष्ठाने आदरः प्रयत्नातिशयोऽस्ति प्रीतिश्चाभिरुचिरूपा हित उदयो यस्याः सा तथा भवति कर्तुरनुष्ठातुः शेषाणां प्रयोजनानां त्यागेन च तत्काले यच्च करोति तदेकमात्रनिष्ठतया तत्प्रीत्यनुष्ठानं ज्ञेयम् ॥ ३ ॥

द्वितीयस्वरूपमाह ॥

**गौरवविशेषयोगाद्बुद्धिमतो यद्विशुद्धतरयोगम् । क्रिययेतरतुल्यमपि ज्ञेयं तद्भक्त्यनुष्ठानम् ॥ ४ ॥**

य० गौरवविशेषयोगात् । गौरवं गुरुत्त्वं पूजनीयत्त्वम् । तद्विशेपयोगात्तदधिकसम्बन्धात् । बुद्धिमतः पुंसो यदनुष्ठानं विशुद्धतरयोगं विशुद्धतरव्यापारं क्रियया कारणेन इतरतुल्यमपि प्रीत्यनुष्ठानतुल्यमपि ज्ञेयं तदेवंविधं भक्त्यनुष्ठानम् ॥४॥

उ० द्वितीयमाह । गौरवेत्यादि । गौरवं गुरुत्त्वं पूज्यत्त्वं तस्य विशेपयोगोऽधिकसम्बन्धस्ततो बुद्धिमतो विशेषग्राहिधीशालिनः । यदनुष्ठानं विशुद्धतरव्यापारं क्रियया वाह्यकारणेनेतरतुल्यमपि प्रीत्यनुष्ठानतुल्यमपि ज्ञेयं तदेवंविधं भक्त्यनुष्ठानम् ॥ ४ ॥

आह कः पुनः प्रीतिभक्त्योर्विशेप उच्यते ॥

**अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृत्यमनयोर्ज्ञातं स्यात्प्रीतिभक्तिगतम् ॥५॥**

प्र० अत्यन्तवल्लभा खलु अत्यन्तवल्लभैव । पत्नी भार्या तद्वत्पत्नीवदत्यन्तेष्टैव हिता च हितकारिणीतिकृत्वा जननी प्र-
सिद्धा । तुल्यमपि सदृशमपि कृत्यं भोजनाच्छादनाद्यनयोर्ज्जननीपत्न्योर्ज्ञातमुदाहरणं स्यात्प्रीतिभक्तिगतं प्रीतिभक्तिविषय-
मिदमुक्तं भवति प्रीत्या पत्न्याः क्रियते भक्त्या मातुरितीयान् प्रीतिभक्त्योर्व्विशेषः ॥ ५ ॥

उ० कः पुनः प्रीतिभक्त्योर्विशेष उच्यते । अत्यन्तेत्यादि । अत्यन्तवल्लभा खल्वत्यन्तप्रियैव पत्नी भार्या तद्वत्पत्नी-
वदत्यन्तेष्टैव हितकारिणीति कृत्वा जननी माता तुल्यमपि सदृशमपि कृत्यं भोजनाच्छादनाद्यनयोर्जननीपत्न्योर्ज्ञातमुदा-
हरणं स्यात् । प्रीतिभक्तिगतं प्रीतिभक्तिविषयं प्रीत्या पत्न्याः क्रियते भक्त्या मातुरितीयान् विशेष इतिभावः । प्रीतित्त्वभ-
क्तित्त्वे क्रियागुणमानोरथिकहर्षगतौ जातिविशेषाविति तर्कानुसारिणः ॥ ५ ॥

तृतीयस्वरूपमाह ॥

**वचनात्मिका प्रवृत्तिः सर्वत्रौचित्ययोगतो या तु । वचनानुष्ठानमिदं चारित्रवतो नियोगेन ॥ ६ ॥**

प्र० वचनात्मिका आगमात्मिका प्रवृत्तिः क्रियारूपा सर्व्वत्र सर्व्वस्मिन् धर्म्मव्यापारे क्षान्तिप्रत्युपेक्षादौ औचित्य-
योगतो या तु देशकालपुरुषव्यवहाराद्यौचित्त्येन वचनानुष्ठानमिदमेवं प्रवृत्तिरूपं चारित्रवतः साधोर्नियोगेन नियमेन ना-
न्यस्य भवति ॥ ६ ॥

उ० तृतीयमाह । वचनेत्यादि । वचनात्मिकाऽऽगमसार्थस्मरणाविनाभाविनी प्रवृत्तिः क्रियारूपा सर्वत्र सर्व्वस्मिन् धर्म्मव्या-
पारे क्षान्तिप्रत्युपेक्षादौ औचित्त्ययोगतो देशकालपुरुषव्यवहाराद्यानुकूल्येन या तु भवति इदमेवं प्रवृत्तिरूपं वचनानुष्ठानं

चारित्रवतः साधोर्नियोगेन नियमेन भवति तस्यैन भवदुर्गलङ्घनं षष्ठगुणस्थानावाप्तेस्तत्र च लोकसंज्ञाभावान्नान्यस्य विपर्ययान्निश्चयनयमतमेतद्व्यवहारतस्त्वन्यस्यापि मार्गानुसारिणो वचने प्रवर्त्तमानस्य देशत इदं भवत्येवेति द्रष्टव्यम् ॥ ६ ॥

तुर्यस्वरूपमाह ॥

यत्त्वभ्यासातिशयात्सात्मीभूतमिव चेष्ट्यते सद्भिः । तदसङ्गानुष्ठानं भवति त्वेतत्तदावेधात् ॥ ७ ॥

य० यत्पुनरभ्यासातिशयादभ्यासप्रकर्षाद्भूयोभूयस्तदासेवनेन सात्मीभूतमिवात्मसाद्भूतमिव चन्दनगन्धन्यायेन चेष्ट्यते क्रियते सद्भिः सत्पुरुषैर्जिनकल्पिकादिभिस्तदेवंविधमसङ्गानुष्ठानं भवति त्वेतज्जायते पुनरेतत्तदावेधाद्वचनावेधादागमसंस्कारात् ॥ ७ ॥

उ० तुर्यस्वरूपमाह । यत्त्वित्यादि । यत्तु यत्पुनरभ्यासातिशयाद्भूयो भूयस्तदासेवा तेन संस्कारविशेषात् सात्मीभूतमिव चन्दनगन्धन्यायेनात्मसाद्भूतमिव चेष्ट्यते क्रियते सद्भिः सत्पुरुषैर्जिनकल्पिकादिभिस्तदेवंविधमसङ्गानुष्ठानं भवति त्वेतज्जायते पुनरेतत्तदावेधात् प्राथमिकवचनसंस्कारात् ॥ ७ ॥

वचनासङ्गानुष्ठानयोर्विशेषमाह ॥

चक्रभ्रमणं दण्डात्तदभावे चैव यत्परं भवति । वचनासङ्गानुष्ठानयोस्तु तज्ज्ञापकं ज्ञेयम् ॥ ८ ॥

य० चक्रभ्रमणं कुम्भकारचक्रपरावर्त्तनं दण्डाद्दण्डसंयोगात्तदभावे चैव यत्परमन्यद्भवति । वचनासङ्गानुष्ठानयोस्तु प्रस्तुतयोस्तु ज्ञापकमुदाहरणं ज्ञेयं यथा चक्रभ्रमणमेकं दण्डसंयोगाज्जायते प्रयत्नपूर्वकमेवं वचनानुष्ठानमप्यागमसंयोगात्

प्रवर्त्तते यथा चान्यच्चक्रभ्रमणं दण्डसंयोगाभावे केवलादेव संस्काराऽपरिक्षयात् संभवत्येवमागमसंस्कारमात्रेण वस्तुतो वचननिरपेक्षमेव स्वाभाविकत्त्वेन यत्प्रवर्त्तते तदसङ्गानुष्ठानमितीयान् भेद इति भावः ॥ ८ ॥

उ० वचनासङ्गानुष्ठानयोर्विशेषमाह । चक्रेत्यादि । चक्रभ्रमणं कुम्भकारचक्रपरावर्त्तनं दण्डाद्दण्डसंयोगात्तदभावे चैव यत्परमन्यद्भवति वचनासङ्गानुष्ठानयोः प्रस्तुतयोस्तु तदेव ज्ञापकमुदाहरणं ज्ञेयं । यथा चक्रभ्रमणमेकं दण्डसंयोगात्प्रयत्नपूर्वकाद्भवति एवं वचनानुष्ठानमप्यागमसंयोगात् प्रवर्त्तते यथा चान्यच्चक्रभ्रमणं दण्डसंयोगाभावे केवलादेव संस्कारापरिक्षयात्संभवत्येवमागमसंस्कारमात्रेण वस्तुतो वचननिरपेक्षमेव स्वाभाविकत्त्वेन यत्प्रवर्त्तते तदसङ्गानुष्ठानमितीयान् भेद इतिभावः ॥ ८ ॥

एषामेव चतुर्णामनुष्ठानानां फलविभागमाह ॥

**अभ्युदयफले चाद्ये निःश्रेयससाधने तथा चरमे । एतदनुष्ठानानां विज्ञेये इह गतापाये ॥ ९ ॥**

य० अभ्युदयफले चाभ्युदयनिवर्त्तके चाद्ये प्रीतिभक्त्यनुष्ठाने । निःश्रेयससाधने मोक्षसाधने । तथा चरमे वचनासङ्गानुष्ठाने एतेषामनुष्ठानानां मध्ये विज्ञेये इह प्रक्रमे गतापाये अपायरहिते निरपाये ॥ ९ ॥

उ० एषामेव चतुर्णामनुष्ठानानां फलविभागमाह । अभ्युदयेत्यादि । अभ्युदयः स्वर्गस्तत्फले एवाद्ये प्रीतिभक्त्यनुष्ठाने निःश्रेयसं मोक्षस्तत्साधने तथा चरमे वचनासङ्गानुष्ठाने एतेषामनुष्ठानानां मध्ये विज्ञेये इह प्रक्रमे गतापाये विघ्नरहिते अत एव पूर्वसंयमः स्वर्गहेतुरपूर्वसंयमश्च मोक्षहेतुरिति सिद्धान्तनयः ॥ ९ ॥

एतेष्वेव चतुर्ष्वनुष्ठानेषु पञ्चविधक्षान्तियोजनामाह ॥

उपकार्यपकारिविपाकवचनधर्मोत्तरा मता क्षान्तिः । आद्यद्वये त्रिभेदा चरमद्वितये द्विभेदेति ॥ १० ॥

य० उपकारी उपकारवान् । अपकारी त्वपकारप्रवृत्तः विपाकः कर्म्मफलानुभवनमनर्थपरम्परा वा वचनमागमः
धर्म्मः प्रशमादिरूपस्तदुत्तरा तत्प्रधाना मता सम्मता पञ्चविधा क्षान्तिः क्षमा । आद्यद्वये आद्यानुष्ठानद्वये त्रिभेदा त्रिप्र-
कारा चरमद्वितये चरमानुष्ठानद्वितये द्विभेदेति द्विधा । तत्रोपकारिणि क्षान्तिरुपकारिक्षान्तिस्तदुक्तं दुर्व्वचनाद्यपि सह-
मानस्य । तथा अपकारिणि क्षान्तिरपकारिक्षान्तिर्मम दुर्व्वचनाद्यसहमानस्यायमपकारी भविष्यतीत्यभिप्रायेण क्षमां कु-
र्वतः । तथा विपाके क्षान्तिः विपाकक्षान्तिः कर्म्मफलविपाकं नरकादिगतमनुपश्यतो दुःखभीरुतया मनुष्यभव एव
वाऽनर्थपरम्परामालोचयतो विपाकदर्शनपुरस्सरा संभवति तथा वचनक्षान्तिरागममेवालम्बनीकृत्य या प्रवर्त्तते न पुनरुप-
कारित्त्वापकारित्त्वविपाकाख्यमालम्बनत्रयं सा वचनपूर्व्वकत्त्वादन्यनिरपेक्षत्त्वात्तथोच्यते धर्म्मोत्तरा तु क्षान्तिश्चन्दनस्येव
शरीरस्य छेददाहादिषु सौरभादिस्वधर्म्मकल्पा परोपकारकारिणी न विक्रियते सहजत्त्वेनावस्थिता सा तथोच्यते ॥ १० ॥

उ० एतेष्वेव चतुर्ष्वनुष्ठानेषु पञ्चविधक्षान्तियोजनामाह । उपेत्यादि । उपकारी उपकारकृदपकारी दुःखदः विपाकोऽ-
दृष्टकर्मफलानुभवो दृष्टानर्थपरम्परा वा धर्म्मः प्रशमादिरूपस्तदुत्तरा तत्पदोत्तरपदाभिधेया क्षान्तिः क्षमा पञ्चविधा मताऽ-
भिप्रेता तत्राद्यद्वये प्रथमानुष्ठानयुग्मे त्रिभेदा त्रिप्रकारा चरमद्वितये तु वचनासङ्गरूपे द्विभेदेति द्विधा तत्रोपकार्युक्तं
दुर्वचनाद्यपि सहमानस्योपकारिक्षान्तिर्मम प्रतिवचनेन मा भूदुपकारसम्बन्धक्षय इति कृत्वा । मम दुर्वचनाद्यसहमानस्याय-

गपकारी गविष्यतीति धिया क्षमां कुर्वतोऽपकारिक्षान्तिः। विपाकं नरकादिगतकर्म्मफलानुभवलक्षणमनुपश्यतो दुःखभीरुतया मनुष्यभव एव वाऽनर्थपरम्परामालोचयतो विपाकदर्शनपुरस्सरा या क्षमा सा विपाकक्षमा। 'आसुरत्तं ण गच्छेज्जा सुच्चा णं जिणसासण'मित्यागममेवालम्बनीकृत्य या प्रवर्त्तेत सा वचनक्षमोपकारित्वादिहेतुत्रयनिरपेक्षत्वेन वचनमात्रपूर्वकत्वात् धर्मक्षान्तिस्तु सा या चन्दनस्येव शरीरस्य च्छेददाहादिषु सौरभादिस्वधर्म्मकल्पा परोपकारिणी न विक्रियते किन्तु सहजभावमनुविधत्ते ॥ १० ॥

इदानीं धर्म्मोत्तराविरहितासु चतसृषु क्षान्तिषु सूक्ष्मेतरातिचारसम्भवप्रदर्शनायाह ॥

**चरमाद्यायां सूक्ष्मा अतिचाराः प्रायशोऽतिविरलाश्च। आद्यत्रये त्वमी स्युः स्थूलाश्च तथा घनाश्चैव ११**

य० चरमाया आद्या वचनक्षान्तिस्तस्यां चरमाद्यायां सूक्ष्मा लघवोऽतिचारा अपराधाः प्रायशः कादाचित्कत्वेनातिविरलाश्च सन्तानाभावेन आद्यत्रये त्वमी स्युराद्यक्षान्तित्रये पुनरमी अतिचाराः स्युर्भवेयुः स्थूलाश्च बादराश्च तथा घनाश्चैव निरन्तराश्चैव ॥ ११ ॥

उ० एतास्वतिचारस्वरूपमाह। चरमेत्यादि। चरमाया आद्या वचनक्षान्तिस्तस्यामतिचारा अपराधाः सूक्ष्मा लघवः प्रायशः कादाचित्कत्वेनातिविरला अतिव्यवहितसन्तानभावाश्च आद्यत्रये तु प्रथमक्षान्तित्रिके त्वमी अतिचाराः स्थूला बादराश्च तथा घनाश्चैव निरन्तराश्चैव स्युः ॥ ११ ॥

वचनानुष्ठानं चारित्रवतो नियोगेनेत्युक्तं । तत्र ज्ञानयोजनामाह ॥

**श्रुतमयमात्रापोहाच्चिन्तामयभावनामये भवतः । ज्ञाने परे यथार्हं गुरुभक्तिविधानसल्लिङ्गे ॥ १२ ॥**

य० श्रुतेन निर्वृत्तं श्रुतमयं तदेव तन्मात्रमवधृतस्वरूपमन्यज्ञानद्वयनिरपेक्षं तदपोहात्तन्निरासादन्यज्ञानद्वयसापेक्षं तु श्रुतमयं न निरस्यत इति ज्ञेयं चिन्तामयभावनामये वक्ष्यमाणस्वरूपे नयप्रमाणसूक्ष्मयुक्तिचिन्तानिर्वृत्तं चिन्तामयं हेतुस्वरूपफलभेदेन कालत्रयविषयं भावनामयं ते भवतो जायेते ज्ञाने परे प्रधाने यथार्हमौचित्त्येन गुरुभक्तिविधानं सच्छोभनं लिङ्गं ययोर्गुरुभक्तिविधानसल्लिङ्गे ॥ १२ ॥

उ० वचनानुष्ठानं चारित्रवतो नियोगेनेत्युक्तं । तत्र ज्ञानयोजनामाह । श्रुतेत्यादि । श्रुतेन निर्वृत्तं श्रुतमयं तन्मात्रापोहात्तदेकसत्तानिरासाच्चिन्तामयभावनामये ज्ञाने वक्ष्यमाणस्वरूपे इह परे प्रकृष्टे यथार्हमौचित्त्येन गुरुभक्तिविधानं सच्छोभनं लिङ्गं ययोस्ते तथा भवतः चारित्रिणो नयप्रमाणसूक्ष्मयुक्तिचिन्तानिर्वृत्तं चिन्तामयं हेतुस्वरूपफलभेदेन कालत्रयविषयं भावनामयं च ज्ञानं प्राधान्येन भवति श्रुतमपि तत्प्रथमभावेन भवत्येव न तु तद्द्वयनिरपेक्षमितिभावः ॥ १२ ॥

ज्ञानत्रयं सफलं दृष्टान्तद्वारेण प्रतिपिपादयिपुराह ॥

**उदकपयोऽमृतकल्पं पुंसां सज्ज्ञानमेवमाख्यातम् । विधियत्नवत्तु गुरुभिर्विषयतृडपहारि नियमेन ॥१३॥**

य० उदकपयोऽमृतकल्पमुदकरसास्वादकल्पं पयोरसास्वादकल्पम् अमृतरसास्वादकल्पं पुंसां विद्वन्पुरुषाणां सज्ज्ञानं सम्यग्ज्ञानमेवमाख्यातं स्वरूपतो विधियत्नवत्तु विधौ यत्नः स विद्यते यस्मिंस्तद्विधियत्नवदेव न विधियत्नशून्यं गुरु-

भिराचार्यैराख्यातं विपयतृडपहारि विपयतृपमपहर्तुं शीलमस्येति नियमेनावश्यंतया श्रुतज्ञानं स्वस्थस्वादुपथ्यसलिलास्वादतुल्यं चिन्ताज्ञानं तु क्षीररसास्वादतुल्यं भावनाज्ञानममृतरसास्वादतुल्यमित्युक्तं भवति ॥ १३ ॥

उ० ज्ञानत्रयस्य रसभेदं दृष्टान्तद्वारोपदर्शयति । उदकेत्यादि । पुंसां विद्वत्पुरुपाणां सज्ज्ञानमेवमुक्तत्रिविधस्वरूपम् उदकपयोऽमृतकल्पमाख्यातं गुरुभिराचार्यैर्विधियत्नवत्तु विधियत्नवदेव नियमेनावश्यंतया विपयतृपमपहर्त्तुं शीलं यस्य तत्तथा श्रुतज्ञानं स्वच्छस्वादुपथ्यसलिलास्वादतुल्यं चिन्ताज्ञानं तु क्षीररसास्वादकल्पं भावनाज्ञानं त्वमृतरसास्वादकल्पमुत्तरोत्तरगुणविशेपेऽपि विपयतृडपहारे सामान्यतः सर्व्वं समर्थमितिभावः ॥ १३ ॥

विपयतृडपहारीत्युक्तं यस्य तु विपयाभिलापातिरेकः स ज्ञानत्रयवानेव फलाभावान्न भवतीत्ययोग्यत्त्वप्रतिपादनाय तस्येदमाह ॥

श्रृण्वन्नपि सिद्धान्तं विषयपिपासातिरेकतः पापः । प्राप्नोति न संवेगं तदापि यः सोऽचिकित्स्य इति१४

य० श्रृण्वन्नपि तीर्थकराभिहितमर्थतः सिद्धान्तं प्रतिष्ठितपक्षरूपं गणधराद्युपनिवद्धमागमं विपयपिपासातिरेकतो रूपरसगन्धस्पर्शशब्दाभिलापातिरेकेण पापः सङ्क्लिष्टाध्यवसायत्वान्न प्राप्नोति संवेगं मोक्षाभिलापं तदापि सिद्धान्तश्रवणकालेऽप्यास्तां तावदन्यदा य एवंविधः सोऽचिकित्स्य इत्यचिकित्सनीयः स वर्त्तते शास्त्रविहितदोपचिकित्साया अनर्हत्त्वादिति १४

उ० यस्य तु दुरुपशमो विपयाभिलापः स फलाभावादज्ञान्येवेति तदयोग्यत्त्वप्रतिपादनायाह । श्रृण्वन्नित्यादि । श्रृण्वन्नपि सिद्धान्तमर्थतस्तीर्थकरोक्तं सूत्रतो गणधरग्रथितं विपयपिपासाया रूपरसगन्धस्पर्शशब्दाभिलापस्यातिरेकत उद्रे-

कालापः सङ्क्लिष्टाध्यवसायस्तदापि सिद्धान्तश्रवणकालेप्यास्तामन्यदा यः संवेगं मोक्षाभिलाषं न प्राप्नोति सोऽचिकित्स्य इति चिकित्साऽनर्हः निरुपक्रमदोषवत्त्वादितिभावः ॥ १४ ॥

इत्थं कर्म्मदोषवतः किं कर्त्तव्यमित्याह ॥

**नैवंविधस्य शस्तं मण्डल्युपवेशनप्रदानमपि । कुर्वन्नेतद्गुरुरपि तदधिकदोषोऽवगन्तव्यः॥ १५॥**

य० न प्रतिषेधे एवंविधस्य पुरुषस्य शस्तं प्रशस्तमनुज्ञातमित्यर्थः । मण्डल्युपवेशनप्रदानमपि अर्थमण्डल्यां यदुपवेशनं श्रवणार्थं तत्प्रदानमपि कुर्वन् सम्पादयन्नेतत्पूर्व्वोक्तं गुरुरपि प्रस्तुतोऽर्थाभिधायी तदधिकदोषोऽयोग्यपुरुषाधिकदोषोऽवगन्तव्योऽवबोद्धव्यः । सिद्धान्तावज्ञापादनादिति ॥ १५ ॥

उ० नेत्यादि । एवंविधस्योक्तरूपायोग्यस्य मण्डल्यामर्थमण्डल्यां यदुपवेशनं श्रवणार्थं तत्प्रदानमपि न शस्तं नानुज्ञातं किं पुनर्दानादीत्यपिशब्दार्थः । एतत्तस्य मण्डल्युपवेशनप्रदानं कुर्वन् गुरुरप्यर्थाभिधातापि तस्मादयोग्यपुरुषादधिकदोषोऽवगन्तव्यः सिद्धान्तावज्ञापादकत्त्वात् ॥ १५ ॥

पूर्व्वोक्तार्थं व्यतिरेकेणाह ॥

**यः शृण्वन्संवेगं गच्छति तस्याद्यमिह मतं ज्ञानम् । गुरुभक्त्यादिविधानात्कारणमेतद्द्वयस्येष्टम् ॥१६॥१०**

य० यः कश्चिद्योग्यः शृण्वन् सिद्धान्तमिति सम्बध्यते संवेगं गच्छत्यास्कन्दति । तस्य योग्यस्याद्यमिह प्रथममिह मतं

ज्ञानं श्रुतज्ञानं। गुरुभक्त्यादिविधानाद्गुरुभक्तिविनयबहुमानादिकरणात् कारणमेतद्द्वयस्येष्टं चिन्तामयभावनामयज्ञानद्वयस्य हेतुरेतत् श्रुतज्ञानमिष्टं । तस्माज्ज्ञानत्रयेऽपि रत्नत्रयकल्पे परमादरो विधेय इति ॥ १६ ॥ १० ॥

उ० उक्तव्यतिरेकस्येष्टतामाह । य इत्यादि । यः कश्चिद् योग्यः शृण्वन् सिद्धान्तमिति पूर्वश्लोकादनुकृष्यते संवेगं मोक्षाभिलाषं गच्छति तस्य योग्यस्येहाद्यं प्रथमं ज्ञानं श्रुतसंज्ञं मतं एतदस्य श्रुतज्ञानं गुरोर्भक्त्यादेर्भक्तिविनयबहुमानादेर्विधानाद्द्वयस्य चिन्तामयभावनामयज्ञानयुगलस्य कारणमिष्टन्तस्माज्ज्ञानत्रयेऽपि रत्नत्रयकल्पे परमादरो विधेयः ॥ १६ ॥ १० ॥

॥ इति दशमं षोडशकम् ॥

---

किं पुनः श्रुतज्ञानस्य प्राक्संभवि लिङ्गमित्याह ॥

**शुश्रूषा चेहाद्यं लिङ्गं खलु वर्णयन्ति विद्वांसः । तदभावेऽपि श्रावणमसिरावनिकूपखननसमम् ॥ १ ॥**

य० श्रोतुमिच्छा च शुश्रूषा चेहाद्यं लिङ्गं श्रुतज्ञाने प्रथमं लक्षणं खलुशब्दो वाक्यालङ्कारे वर्णयन्ति विद्वांसो विचक्षणास्तदभावेऽपि शुश्रूषाया अभावेऽपि श्रावणं श्रवणे प्रयोजनं कर्त्तव्यं गुरोः शिष्यविषयमिति गम्यते असिरावनिकूपखननसमं असिरायामवनौ कूपखननमखननमेव अनुदकप्राप्तिफलत्वात्तेन समं विवक्षितफलरहितमित्यर्थः बोधप्रवाहो हि श्रावणस्य फलं उदकप्रवाह इव कूपखननस्य स च शुश्रूषासिराऽभावे न संभवतीति । तेन सममित्युक्तं इति हृदयम् ॥ १ ॥

उ० किं पुनः श्रुतज्ञानस्य प्राक्संभवि लिङ्गमित्याह । शुश्रूषा चेत्यादि । शुश्रूषा च श्रोतुमिच्छा चेह श्रुतज्ञाने आद्यं प्रथमं लिङ्गं लक्षणं खलुशब्दो वाक्यालङ्कारे वर्णयन्ति कथयन्ति विद्वांसो विचक्षणाः तदभावेऽपि शुश्रूषाभावेपि श्रावणं

श्रवणप्रयोजककर्तृत्त्वं गुरोः शिष्यविषयमितिगम्यते असिरायामवनौ कूपखननसमं बोधप्रवाहादिश्रावणस्य फलमुदकप्रवाह इव कूपखननस्य सच शुश्रूपासिराभावे न संभवतीति तत्समत्त्वेन भ्रममूलश्रममात्रफलत्त्वमुक्तं भवति ॥ १ ॥

शुश्रूपा चेहाद्यं लिङ्गमित्युक्तं तामेव विभजयन्नाह ॥

**शुश्रूषापि द्विविधा परमेतरभेदतो बुधैरुक्ता । परमा क्षयोपशमतः परमाच्छ्रवणादिसिद्धिफला ॥ २ ॥**

य० शुश्रूपापि प्रागुक्ता द्विविधा द्विप्रकारा परमेतरभेदतः प्रकृष्टेतरभेदेन । बुधैर्विद्वद्भिरुक्ता प्रतिपादिता परमा प्रधाना क्षयोपशमतः क्षयोपशमात्परमात्प्रधानाद्भवति । सा च श्रवणादिसिद्धिफला श्रवणग्रहणधारणादिसिद्धिः फलमस्या इति ॥ २ ॥

उ० शुश्रूपामेव भेदत आह । शुश्रूपापीत्यादि । शुश्रूपापि प्रागुक्ता द्विविधा द्विप्रकारा परमेतरभेदतः प्रकृष्टेतरभेदाभ्यां बुधैर्विद्वद्भिरुक्ता तत्र परमादुत्कृष्टात् क्षयोपशमात् शुश्रूपावरणस्य परमा शुश्रूपा भवति सा च श्रवणादेः श्रवणग्रहणधारणादेः सिद्धिः फलं यस्याः सा तथा ॥ २ ॥

परमायाः शुश्रूपायाः फलमुपदर्शयति ॥

**यूनो वैदग्ध्यवतः कान्तायुक्तस्य कामिनोऽपि दृढम् । किन्नरगेयश्रवणादधिको धर्मश्रुतौ रागः ॥ ३ ॥**

य० यूनो वयस्थस्य वैदग्ध्यवतो वैचक्षण्यवतः सर्व्वकलाकुशलस्य कान्तायुक्तस्य कमनीयप्रियतमासमन्वितस्य कामि-

नोऽप्यनुरक्तस्यापि दृढमत्यर्थं किन्नरगेयश्रवणाद्दिव्यगीतश्रवणात्कर्णामृतकल्पादधिको विशेषवान् धर्म्मश्रुतौ धर्म्मश्रवणे रागोऽभिलाषः एवं श्रवणादिसिद्धिफला परमा शुश्रूषा भवति ॥ ३ ॥

उ० अस्यां सम्पन्नायां यत्सम्पद्यते तदाह । यून इत्यादि । यूनस्तरुणस्य वैदग्ध्यवतश्चातुरीशालिनः कान्तया कमनीयकामिन्या युक्तस्य कामिनोऽप्यनुरक्तस्यापि दृढमत्यर्थः किन्नराणां गेयस्य सर्वातिशयितामृतकल्पगानस्य श्रवणादधिको विशेषवान् धर्मश्रुतौ धर्म्मश्रवणे रागोऽभिलाषः परमशुश्रूषायां भवति शुश्रूषेच्छात्मिका रागस्तु प्रशस्तवासनात्मक इति हेतुफलयो र्भेदः ॥ ३ ॥

अस्यामेव सत्यां यद्भवति तदाह ॥

गुरुभक्तिः परमास्यां विधौ प्रयत्नस्तथाऽऽदृतिः करणे । सद्ग्रन्थाप्तिः श्रवणं तत्त्वाभिनिवेशपरमफलम्॥४॥

य० गुरुविषया भक्तिः परमा प्रधानाऽस्यां गुरुशुश्रूषायां सत्यां विधौ विधिविषये क्षेत्रशुद्ध्यादौ प्रयत्नः परमादरस्तथाऽऽदृतिः करणे आगमार्थक्रियायां सद्ग्रन्थाप्तिः सती शोभना ग्रन्थाप्तिः परिस्फुटसूत्रार्थावाप्तिः, श्रवणमर्थस्य, तत्त्वाभिनिवेशपरमफलम्, तत्त्वज्ञानपरमफलम् ॥ ४ ॥

उ० गुरुभक्तिरित्यादि । गुरौ भक्तिः परमा प्रधानाऽस्यां परमशुश्रूषायां सत्यां भवति तथा विधौ क्षेत्रशुद्धिमण्डलिनिपद्यादिविधिविषये प्रयत्नोऽप्रमादस्तथाऽऽदृतिरादरः करणे आगमार्थक्रियायां सती शोभना ग्रन्थाप्तिः परिस्फुटसूत्रार्था-

धिगतिः सद्ग्रन्थानां रहस्यशास्त्राणामासिर्वा । श्रवणमर्थस्य तत्त्वाभिनिवेशो निश्चितप्रामाण्यकं तत्त्वज्ञानं परमं प्रकृष्टं फलं यस्य तत्तथा ॥ ४ ॥

अपरशुश्रूषामुपदर्शयति ॥

विपरीता त्वितरा स्यात्प्रायोऽनर्थाय देहिनां सा तु । या सुप्तनृपकथानकशुश्रूषावत्स्थिता लोके ॥ ५ ॥

य० विपरीता तूक्तविपरीता इतरा अपरमा शुश्रूषा स्यात् । प्रायो बाहुल्येनानर्थायानुपकाराय देहिनां शरीरिणां सा तु सा पुनरितरशुश्रूषा या कीदृशी । सुप्तश्चासौ नृपश्च शय्याव्यवस्थितो लीलया स्वापार्थं किञ्चित्किञ्चित् शृणोति तस्य कथानके क्वचिदाख्यायिकायां शुश्रूषा श्रवणेन्द्रियव्यापृतिस्तद्वत् । सुप्तनृपकथानकशुश्रूषावत् । स्थिता प्रतिष्ठिता प्रसिद्धा लोके सर्व्वत्रैव । यथा नृपस्य कथानकश्रवणे न महानादरोऽथ च किञ्चिच्छृणोत्येवमयमप्यपरमशुश्रूषायामादरमन्तरेण किञ्चिच्छृणोति ॥ ५ ॥

उ० अपरमशुश्रूषामुपदर्शयति । विपरीतेत्यादि । विपरीता तूक्तविपरीतैवेतराऽपरमशुश्रूषा स्यात् प्रायो बाहुल्येनानर्थायानुपकाराय देहिनां सा तु सा पुनरितरशुश्रूषा श्रवणव्यावृत्ति(पृति)स्तद्वत् स्थिता प्रसिद्धा लोके सर्व्वत्रैव यथा नृपस्य कथानकश्रवणे न महानादरोऽथ च किञ्चिच्छृणोति अनुषङ्गश्रवणमात्ररसिकत्त्वात्तथाऽपरमशुश्रूषावानपि लीलया किञ्चिच्छृणोति नतु परमादरेणेत्यर्थः ॥ ५ ॥

इदानीं त्रयाणां श्रुतादिज्ञानानां किञ्चिद्विभागमुपदर्शयति ॥

**ऊहादिरहितमाद्यं तद्युक्तं मध्यमं भवेज्ज्ञानम्। चरमं हितकरणफलं विपर्य्ययो मोहतोऽन्य इति ॥६॥**

य० ऊहो वितर्कः, ऊहापोहविज्ञानादिरहितमाद्यं प्रथमं श्रुतमयं तद्युक्तमूहादियुक्तं मध्यमं चिन्तामयं भवेत् ज्ञानं द्वितीयं चरमं भावनामयं तृतीयं हितकरणफलं हितकरणं फलमस्येति स्वहितनिर्वर्त्तनफलं विपर्य्ययो विपर्य्यासो मिथ्या ज्ञानं, मोहतो मोहान्मिथ्यात्त्वमोहनीयोदयात्। ज्ञानत्रयादन्योऽवोध इति ॥ ६ ॥

उ० शुश्रूपाजन्यानां श्रुतादिज्ञानानां विभागमुपदर्शयति। ऊहेत्यादि। ऊहादिना रहितमाद्यं ज्ञानं श्रुतज्ञानसंज्ञं भवेदूहो वितर्कः आदिनाऽपोहा तद्युक्तमूहादियुक्तं मध्यमं चिन्तामयं भवेद् ज्ञानं द्वितीयं। चरमं भावनामयं तृतीयं हितकरणं फलं यस्य तत्तथाऽन्य एतद्ज्ञानत्रयाद्भिन्नो वोधो विपर्य्ययो विपर्य्यासो मिथ्याज्ञानमितियावत् मोहतो मिथ्यात्त्वमोहनीयोदयात् ॥ ६ ॥

श्रुतमयज्ञानस्य लक्षणमाह ॥

**वाक्यार्थमात्रविषयं कोष्ठकगतवीजसन्निभं ज्ञानम्। श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ७**

य० सकलशास्त्रगतवचनाविरोधिनिर्णीतार्थवचनं वाक्यं, तस्यार्थमात्रं प्रमाणनयाधिगमरहितं। तद्विषयं तद्गोचरं। वाक्यार्थमात्रविषयं न तु परस्परविभिन्नविषयशास्त्रावयवभूतपदमात्रवाच्यार्थविषयं। कोष्ठके लोहकोष्ठकादौ गतं स्थितं

यद्बीजं धान्यं तत्सन्निभमविनष्टत्त्वात्, कोष्ठकगतबीजसन्निभं ज्ञानं श्रुतमयमिह प्रक्रमे विज्ञेयं वेदितव्यं । मिथ्याभिनिवेशोऽसदभिनिवेशस्तेन रहितं विप्रमुक्तमलमत्यर्थम् ॥ ७ ॥

उ० तत्र श्रुतज्ञानस्य लक्षणमाह । वाक्यार्थेत्यादि । वाक्यार्थः प्रकृतवाक्यैकवाक्यतापन्नसकलशास्त्रवचनार्थाविरोधिवचनार्थस्तन्मात्रं प्रमाणतयाधिगमरहितं तद्विषयं तद्गोचरं ननु परस्परविभिन्नविषयशास्त्रावयवभूतपदमात्रवाच्यार्थविषयं तस्य संशयादिरूपत्त्वेनाज्ञानत्त्वात् कोष्ठके लोहकोष्ठकादौ गतं स्थितं यद्बीजं धान्यं तत्सन्निभमविनष्टत्त्वात् श्रुतमयमिह प्रक्रमे विज्ञेयं मिथ्याभिनिवेशोऽसद्ग्रहस्तेन रहितं विप्रमुक्तमलमत्यर्थं पदार्थज्ञानोत्थापितानुपपत्तिनिरासप्रधानत्त्वात्॥ ७ ॥

चिन्तामयज्ञानस्य लक्षणमाह ॥

**यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम्। उदक इव तैलविन्दुर्विसर्पि चिन्तामयं तत्स्यात् ८**

य० यत्तु यत्पुनर्म्महावाक्यार्थजमाक्षिप्तेतरसर्व्वधर्म्मात्मकत्त्ववस्तुप्रतिपादकानेकान्तवादविषयार्थजन्यमतिसूक्ष्मा अतिशयसूक्ष्मवुद्धिगम्याः शोभना अविसंवादिन्यो या युक्तयः सर्व्वप्रमाणनयगर्भास्तच्चिन्तया तदालोचनयोपेतं युक्तम् । उदक इव सलिल-इव तैलविन्दुस्तैललवो विसर्प्पणशीलं विसर्पि विस्तारयुक्तं चिन्तया निर्वृत्तं चिन्तामयं तज्ज्ञानं स्याद्भवेत् ८

उ० चिन्तामयज्ञानस्य लक्षणमाह—यत्त्वित्यादि । यत्तु यत्पुनर्महावाक्यार्थजमाक्षिप्तेतरसर्वधर्मात्मकवस्तुप्रतिपादकानेकान्तवादव्युत्पत्तिजनितमतिसूक्ष्मा अतिशयितसूक्ष्मवुद्धिगम्याः शोभना अविसंवादिन्यो या युक्तयः सर्वप्रमाणनयगर्भाः

तच्चिन्तया तदालोचनयोपेतं सहितं उदक इव सलिल इव तैलविन्दुस्तैललवो विसर्पि विस्तारयुक्तं चिन्तया निर्वृत्तं चिन्तामयं तज् ज्ञानं स्याद्भवेत् ॥ ८ ॥

भावनाज्ञानलक्षणमाह ॥

ऐदम्पर्य्यगतं यद्विध्यादौ यत्नवत्तथैवोच्चैः । एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ९ ॥

य० ऐदम्पर्य्यं तात्पर्यं सर्व्वज्ञेयक्रियाविषये सर्वज्ञाज्ञैव प्रधानं कारणमित्येवंरूपं तद्गतं तद्विषयं यज्ज्ञानं विध्यादौ विधिद्रव्यदातृपात्रादौ, यत्नवत्परमादरयुक्तं तथैवोच्चैः ऐदम्पर्य्यवत्त्वापेक्षया यत्नवत्त्वस्य समुच्चयार्थं तथैवेत्यस्य ग्रहणं । एतत्तु एतत्पुनर्भावनया निर्वृत्तं भावनामयं ज्ञानं । अशुद्धस्य सद्रत्नस्य जात्यरत्नस्य स्वभावत एव क्षारमृत्पुटपाकाद्यभावेऽपि भास्वररूपस्य या दीप्तिस्तया सममशुद्धसद्रत्नदीप्तिसमम् । यथाहि जात्यरत्नस्य स्वभावत एवान्यरत्नेभ्योऽधिका दीप्तिर्भवत्येवमिदमपि भावनाज्ञानमशुद्धसद्रत्नकल्पस्य भव्यजीवस्य कर्म्ममलमलिनस्यापि शेषज्ञानेभ्योऽधिकप्रकाशकारि भवति । अनेन हि ज्ञानं ज्ञातं नाम क्रियाप्येतत्पूर्व्विकैव मोक्षायाऽक्षेपेण सम्पद्यत इति ॥ ९ ॥

उ० भावनाज्ञानलक्षणमाह । ऐदम्पर्येत्यादि । ऐदम्पर्यं तात्पर्य सर्वज्ञेयविषये सर्वज्ञाज्ञैव प्रधानं कारणमित्येवंरूपं तद्गतं तद्विषयं यज् ज्ञानं विध्यादौ विधिद्रव्यादातृपात्रादौ उच्चैरतिशयेन यत्नवत्परमादरयुक्तं तथैवैदम्पर्यवत्त्वयत्नवत्त्वयोः समुच्चयार्थं तथैवेत्यस्य ग्रहणं एतत्तु एतत्पुनर्भावनया निर्वृत्तं भावनामयं ज्ञानं अशुद्धस्य क्षारमृत्पुटकाद्यभावेपि नशुद्धिमतोऽपि सद्रत्नस्य स्वभावतो या दीप्तिस्तत्समं यथाहि जात्यरत्नं स्वभावत एवान्यरत्नेभ्योऽधिकदीप्तिमत्तथेदमपि भावना-

ज्ञानमशुद्धसद्रत्नकल्पस्य भव्यजीवस्य कर्ममलिनस्यापि शेषज्ञानेभ्योऽधिकप्रकाशकृद्भवति अनेन हि ज्ञातं ज्ञानं क्रियाप्ये-तत्पूर्विकैवाक्षेपेण मोक्षदेति। अत्र चैकस्मादपि वाक्याद्व्युत्पत्तिविशेषेण जायमानानां वाक्यार्थज्ञानादीनां महावाक्यार्थशब्द-ज्ञानादाववान्तरव्यापारत्त्वमिति न विरम्यव्यापारानुपपत्तिदोषस्तथाचाहुःतार्किकाः"सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारो यत्परः स शब्दार्थ"इत्यन्यत्र विस्तरः ॥ ९ ॥

साम्प्रतं त्रयाणां श्रुतचिन्ताभावनामयज्ञानानां विषयविभागार्थं फलाभिधानाय प्रक्रमते कारिकाद्वयेन ॥

**आद्य इह मनाक्पुंसस्तद्रागाद्दर्शनग्रहो भवति। न भवत्यसौ द्वितीये चिन्तायोगात् कदाचिदपि॥१०॥**

**चारिचरकसञ्जीव(वि)न्यचरकचारणविधानतश्चरमे। सर्वत्र हिता वृत्तिर्गाम्भीर्यात्समरसापत्त्या ॥११॥**

य० आद्ये श्रुतज्ञाने इह प्रवचने। मनागीषत्पुंसः पुरुषस्य तद्रागाच्छ्रुतमयज्ञानानुरागात्। दर्शनग्रहो भवति दर्शनं मतं श्रुतमित्येकोऽर्थस्तद्ग्रहस्तदाग्रहो यथेदमत्रोक्तमिदमेव च प्रमाणं नान्यदित्येवंरूपो, न भवत्यसौ दर्शनग्रहो यथेदमस्म-दीयं दर्शनं शोभनमन्यदीयमशोभनमित्येवंरूपो द्वितीये चिन्तायोगादतिसूक्ष्मसुयुक्तिचिन्तनसम्बन्धात् कदाचिदपि काले न भवति॥१०॥ नयप्रमाणाधिगमसमन्वितो हि विद्वान् प्रेक्षावत्तया स्वपरतन्त्रोक्तं न्यायबलायातमर्थं सर्वं प्रतिपद्यते। तेनास्य दर्शनग्रहो न भवति॥१०॥चारेश्चरको भक्षयिता सञ्जीवन्या औषधेरचरकोऽनुपभोक्ता तस्य चारणमभ्यवहारणं तस्य विधानं सम्पादनं, तस्माच्चारिचरकसञ्जीवन्यचरकचारणविधानतश्चरमे भावनामयज्ञाने सति सर्व्वत्र सर्व्वेषु जीवेषु हितावृत्तिः हितहेतुः प्रवृत्तिर्न कस्यचिदहिता। गाम्भीर्यादाशयविशेषात्समरसापत्त्या सर्व्वानुग्रहरूपया "कयाचित् स्त्रिया कस्यचित्पुरुषस्य वशीकरणार्थं

परिव्राजिकोक्ता यथेमं मम वशवर्त्तिनं वृषभं कुरु, तया च किल कुतश्चित्सामर्थ्यात्स वृषभः कृतस्तं चारयन्ती पाययन्ती चास्तेऽन्यदा च वटवृक्षस्याधस्तान्निषण्णे तस्मिन् पुरुषगवे, विद्याधरीयुग्ममाकाशगमागमत्तत्रैकयोक्तमयं स्वाभाविको न गौर्द्वितीययोक्तं कथमयं स्वाभाविको भवति । तत्राद्ययोक्तमस्य वटस्याधस्तात्सञ्जीवनीनामौषधिरस्ति यदि तां चरति तदायं स्वाभाविकः पुरुषो जायते । तच्च विद्याधरीवचनं तया स्त्रिया समाकर्णितं तया चौषधिं विशेषतोऽजानानया सर्व्वामेव चारिं तत्प्रदेशवर्त्तिनीं सामान्येनैव चारितः । यावत्सञ्जीवनीमुपभुक्तवान् । तदुपभोगानन्तरमेवासौ पुरुषः संवृत्तः" एवमिदं लौकिकमाख्यानकं श्रूयते । यथा तस्याः स्त्रियास्तस्मिन् पुरुषगवे हिता प्रवृत्तिरेवं भावनाज्ञानसमन्वितस्यापि सर्व्वत्र भव्यसमुदायेऽनुग्रहप्रवृत्तस्य हितैव प्रवृत्तिरिति ॥ ११ ॥

उ० एतेषां त्रयाणां विषयविभागमाह । आद्य इत्यादि । चारीत्यादि । आद्ये श्रुतज्ञाने इह जगति मनागीषत्पुंसस्तद्वतः पुरुषस्य तद्रागात् श्रुतमयज्ञानानुरागाद्दर्शनग्रहोऽसत्यपक्षपातो भवति यथेदं मयोक्तमिदमेव च प्रमाणं नान्यदिति असौ दर्शनग्रहोऽस्मदीयं दर्शनं शोभनमन्यदीयमशोभनमित्येवंरूपो द्वितीये चिन्तामये ज्ञाने चिन्तायोगादतिसूक्ष्मसुयुक्तिचिन्तनसम्बन्धात्कदाचिदपि काले न भवति । दृष्टनयप्रमाणरूपसिद्धान्तसद्भावो हि विद्वान् सर्वं स्वपरतन्त्रोक्तमर्थं स्थानाविरोधेन प्रतिपद्यते नत्वेकान्ततस्तत्र विप्रतिपद्यत इति । तथाचाह सम्मतौ महामतिः । णिययवयणिज्जसच्चा सव्वणया परवियालणे मोहा । ते पुण अदिट्ठसमओ विभयइ सच्चे व अलिए वत्ति ॥ १० ॥ चारेश्वरको भक्षयिता सञ्जीविन्या औषधेश्चाचरकोऽनुपभोक्ता तस्य चारणमभ्यवहारणं तस्य विधानतो दृष्टान्ताच्चरमे भावनामये ज्ञाने सति सर्व्वत्र सर्वजी-

मिथ्यात्त्वदोषतस्तत्त्वार्थाश्रद्धानदोषाद्वचनादागमाद् दीप इव मण्डलगतो मण्डलाकारविपयो वोधस्तैमिरिकस्येव स वोधो वचनाद्भवन्नपि दोषजत्त्वाद्विपर्य्ययो मिथ्याप्रत्ययः पदमात्रवाच्यार्थविपयः पापः पापहेतुः ॥ १२ ॥

विपर्यय एव प्रस्तुते दृष्टान्तगर्भमुपनयमाह कारिकाद्वयेन ॥

**दण्डीखण्डनिवसनं भस्मादिविभूषितं सतां शोच्यम्। पश्यत्यात्मानमलं ग्रही नरेन्द्रादपि ह्यधिकम् १३**
**मोहविकारसमेतः पश्यत्यात्मानमेवमकृतार्थम् । तद्व्यत्ययलिङ्गरतं कृतार्थमिति तद्ग्रहादेव ॥ १४ ॥**

य० दण्डी खण्डं प्रसिद्धं निवसनं परिधानमस्येति दण्डीखण्डनिवसनस्तं भस्मादिभिर्विभूपितं विच्छुरितं भस्मादिविभूपितं सत्पुरुषाणां शोच्यं शोचनीयं पश्यत्यवलोकयत्यात्मानमलमत्यर्थं ग्रही ग्रहवान् नरेन्द्रादपि ह्यधिकं चक्रवर्त्तिनोऽप्यधिकं यथेति गम्यते ॥ १३ ॥ मोहविकारसमेतो मनोविभ्रमदोपसमन्वितः पश्यत्यात्मानमेवमकृतार्थं सन्तं विपर्य्ययबोधवान् कृतार्थमितिपश्यति तस्य कृतार्थस्य व्यत्ययेन यानि लिङ्गानि तेषु रतस्तं तद्व्यत्ययलिङ्गरतम्। अनेनाकृतार्थत्त्वमेव वस्तुवृत्त्या दर्शयति । एवंविधोऽपि कृतार्थमिति कुतो मन्यते । तद्ग्रहादेव सचासौ ग्रहश्च तस्मादेव विवक्षितग्रहावेशादेव । एवंग्रहगृहीतेन विपर्य्ययवत उपनयः कृतः ॥ १४ ॥

उ० विपर्य्यय एव प्रस्तुते दृष्टान्तगर्भमुपनयमाह । दण्डीत्यादि । मोहेत्यादि । दण्डीखण्डं कृतसन्धानविशेषं जीर्णवस्त्रं तन्निवसनं परिधानं यस्य स तथा तम् । भस्मादिभिर्विभूपितं विच्छुरितं सतां सत्पुरुषाणां शोच्यं शोचनीयं पश्यत्यवलोकयत्यलमत्यर्थमात्मानं ग्रही स्वाग्रहवान्नरेन्द्रादपि हि चक्रवर्त्तिनोपि हि अधिकमतिशयितं यथेतिगम्यते ॥ १३ ॥ मोह-

त्रये सति दीक्षाया विरतिरूपाया अधिकारी अधिकारवान् तत्त्वतः परमार्थतो भवति सत्त्वः पुमानितरस्यानधिकारिणः पुनः दीक्षा वसन्तनृपसन्निभा चैत्रमासपरिहासकृतराजतुल्या विडम्बनप्रायत्वेन ज्ञातव्या ॥ १ ॥

अधुना दीक्षाया निरुक्तमुपदर्शयन् ज्ञानिन एव तां नियमयन्नाह ॥

**श्रेयोदानादशिवक्षपणाच्च सतां मतेह दीक्षेति । सा ज्ञानिनो नियोगाद्यथोदितस्यैव साध्वीति ॥ २ ॥**

य० श्रेयोदानाच्छ्रेयः सुन्दरं तस्य दानं वितरणं तस्मात् । अशिवं प्रत्यवायस्तत्क्षपणाच्च तन्निरसनाच्च । सतां मुनीनां मताऽभिप्रेता इह प्रवचने दीक्षेति प्रागुक्ता । इत्येवमनया निरुक्तप्रक्रियया सा दीक्षा ज्ञानिनो ज्ञानवतो नियोगान्नियोगेन यथोदितस्यैवाधिकारिण एव साध्वीति निरवद्या वर्त्तते ॥ २ ॥

उ० दीक्षापदनिरुक्तमुपदर्शयन् ज्ञानिन एव तां निगमयन्नाह । श्रेय इत्यादि । श्रेयसः कल्याणस्य दानादशिवस्य प्रत्यवायस्य क्षपणाच्च सतां मुनीनां मताभिप्रेतेह प्रवचने दीक्षा इत्येवमनया निरुक्तप्रक्रियया सा दीक्षा ज्ञानिनो नियोगान्नियमाद् यथोदितस्यैवाधिकारिण एव साध्वीति निरवद्या वर्त्तते ॥ २ ॥

ननु च यदि ज्ञानिन एव नियमेन साध्वी दीक्षा ततः कथं पूर्वोक्तज्ञानत्रयविकलानां मापतुपप्रभृतीनां समये सा श्रेयसी श्रूयत इत्याशङ्क्याह ॥

**यो निरनुबन्धदोषाच्छ्राद्धोऽनाभोगवान् वृजिनभीरुः । गुरुभक्तो ग्रहरहितः सोऽपि ज्ञान्येव तत्फलतः ॥ ३ ॥**

य० य एवंविधो निरनुबन्धदोषाच्छ्राद्धः । निरनुबन्धो व्यवच्छिन्नसन्तानो दोषो रागादिर्निरनुबन्धश्चासौ दोषश्च

तस्माच्छ्राद्धः श्रद्धावान् । यस्तु सानुबन्धदोषान्निरुपक्रमक्लिष्टकर्म्मलक्षणात् कथञ्चिच्छ्राद्धो भवति । स नेह गृह्यते । अनाभोगवान् अनाभोगोऽपरिज्ञानमात्रमेव केवलं ग्रन्थार्थादिषु सूक्ष्मबुद्धिगम्येषु स विद्यते यस्य स तथा वृजिनं पापं तस्माद्भीरुर्वृजिनभीरुः संसारविरक्तत्त्वेन । गुरवः पूज्यास्तेषु भक्तो गुरुबहुमानात् । ग्रह आग्रहो मिथ्याभिनिवेशस्तेन रहितो ग्रहरहितोऽनेन सम्यग्दर्शनवत्त्वमस्यावेदयति सोऽपि य एवमुक्तविशेषणवान् । ज्ञान्येव ज्ञानवानेव । तत्फलतो ज्ञानफलसम्पन्नत्त्वेन ज्ञानस्यापि ह्येतदेव फलं संसारविरक्तत्त्वगुरुभक्तत्त्वादि । तदस्यापि विद्यत इति कृत्वा ॥ ३ ॥

उ० ननु यदि ज्ञानिन एव दीक्षा साध्वी तदा कथं प्रागुक्तज्ञानत्रयविकलानां मापतुषादीनां समये सा श्रेयसी श्रूयत इत्याशङ्क्याह । य इत्यादि यो निरनुबन्धाव्यवच्छिन्नसन्तानाद्दोषाज् ज्ञानावरणादेः श्राद्धः श्रद्धावान् यस्तु सानुबन्धदोषान्निरुपक्रमक्लिष्टकर्म्मलक्षणाज्जातभावप्रतिघातः कथञ्चिच्छ्राद्धो भवति स नेह गृह्यतेऽनाभोगः सूक्ष्मधीगम्यग्रन्थार्थापरिज्ञानमात्रं स एव यस्यास्ति सोऽनाभोगवान् वृजिनात्पापाद् भीरुर्भवविरक्तत्त्वात् गुरुषु पूज्येषु भक्तस्तद्बहुमानित्त्वात् ग्रहो मिथ्याभिनिवेशस्तेन रहितः सोऽपि य ईदृगुक्तविशेषणवान् ज्ञान्येव ज्ञानवानेव तत्फलतो ज्ञानफलभावाज् ज्ञानेनापि भवविरक्तत्त्वादि फलं क्रियते तदस्याप्यस्तीतिकृत्वा ॥ ३ ॥

कथं पुनर्ज्ञानफलं मापतुषादेर्गुरुबहुमानमात्रेण तथाविधज्ञानविकलस्य सन्मार्ग्गगमनादीत्याशङ्क्याह ॥

चक्षुष्मानेकः स्यादन्धोऽन्यस्तन्मतानुवृत्तिपरः । गन्तारौ गन्तव्यं प्राप्नुत एतौ युगपदेव ॥ ४ ॥

य० चक्षुरमलमनुपहतं विद्यते यस्य स चक्षुष्मानेकः कश्चित्स्याद्भवेत्पुरुषो मार्गगमनप्रवृत्तः अन्धो दृष्टिविकलोऽन्यस्तद-

परः केवलं मार्गानुसारितया विशिष्टविवेकसम्पन्नत्त्वेन च। तन्मतानुवृत्तिपरस्तस्य चक्षुष्मतो मतमभिप्रायो वचनं वा तन्मूलं तदनुवृत्तिपरस्तदनुवर्त्तनप्रधानः शेषाऽनुमतवचनपरित्यागेन । एतौ द्वावपि चक्षुष्मत्सदन्धौ गन्तारौ गमनशीलावनवरतप्रयाणकवृत्त्या गन्तव्यं विवक्षितनगरादि। प्राप्नुत एतौ युगपदेवैककालमेव । इदमुक्तं भवति चक्षुष्मान् पुरस्ताद्व्रजत्यन्धस्तु पृष्ठत एवमनयोर्व्रजतोरेकपदन्यास एवान्तरं नापरं महद् यदिवा तदपि समानपदन्यासयोः साहित्येन बाहुलग्नयोर्व्रजतोर्नास्तीत्येवमेककाला प्रासव्यनगरादिस्थानप्राप्तिर्द्वयोरपीति । यथैवमेतयोर्नान्तरं तथा गुरुमाषतुषकल्पशिष्ययोर्ज्ञान्यज्ञानिनोः फलं प्रति सन्मार्गगमनप्रवृत्तयोर्मार्गपर्यन्तप्राप्तौ मुक्त्यवस्थायां न किञ्चिदन्तरमिति गर्भार्थः ॥ ४ ॥

उ० फलतुल्यतायामेव दृष्टान्तमाह । चक्षुष्मानित्यादि । एकः कश्चित्पुरुषो मार्गगमनप्रवृत्तश्चक्षुष्मान्निर्मलानुपहतनेत्रः स्यादन्योन्धो दृग्विकलस्तस्य चक्षुष्मतो मतं वचनं तदनुवृत्तिपरः तदनुसारे परः प्रधानो मार्गानुसारिताप्रयोजकादृष्टेनान्यानुवृत्तिव्यावर्त्तनात् एतौ द्वावपि चक्षुष्मत्सदन्धौ गन्तारौ गमनशीलावनवरतप्रयाणप्रवृत्त्या गन्तव्यमभिमतनगरादि युगपदेवैककालमेव प्राप्नुतः तयोरग्रपृष्ठभावेन व्रजतोरेकपदन्यास एवान्तरं न महद्यद्वा तदपि तुल्यपदन्यासयोरेकश्रेण्या बाहुलग्नयोर्व्रजतोर्नास्तीति द्वयोर्युगपत्प्राप्तव्यप्राप्तिः। एवं ज्ञान्यज्ञानिनोरपि सन्मार्गगमनप्रवृत्तयोर्मुक्तिपुरप्राप्तौ नान्तरमिति गर्भार्थः ॥ ४ ॥

एवं समानफलत्त्वं ज्ञान्यज्ञानिनोः प्रतिपाद्य दीक्षार्हत्त्वं विशेषज्ञानाऽसमन्वितस्यापि दर्शयति ॥

यस्यास्ति सत्क्रियायामित्थं सामर्थ्ययोग्यताऽविकला। गुरुभावप्रतिबन्धाद्दीक्षोचित एव सोऽपि किल ५

य० यस्य विशिष्टज्ञानरहितस्याप्यस्ति विद्यते सत्क्रियायां सदाचारे । इत्थमनेन प्रकारेण सामर्थ्ययोग्यता सामर्थ्येन समानफलसाधकत्त्वरूपेण योग्यताऽविकला परिपूर्णा । गुरुषु धर्म्माचार्यादिषु भावप्रतिबन्धात् भावतः प्रतिबद्धत्त्वेन हेतुना दीक्षोचित एव दीक्षायोग्य एव प्रस्तुतः किलेत्याप्तागमवादः यतः संसारविरक्त एवास्या अधिकारी शेषगुणवैकल्येऽपीत्युक्तम् ॥ ५ ॥

उ० इत्थं ज्ञानिवदज्ञानिनोप्युक्तरूपस्य तुल्यफलत्त्वाद् दीक्षायोग्यत्त्वमिति दर्शयति । यस्येत्यादि । यस्य विशिष्टज्ञानरहितस्याप्यस्ति सत्क्रियायां सदाचारे इत्थमनेन प्रकारेण सामर्थ्यं समानफलजननशक्तिरेव योग्यतोत्तमता गुरुषु धर्माचार्यादिषु भावप्रतिबन्धादन्तरङ्गसम्बन्धात् सोऽपि दीक्षोचित एव किलेत्याप्तागमवादः शेषगुणवैकल्येऽपि संसारविरक्त एवात्राधिकारीतिभावः ॥ ५ ॥

इदानीं दीक्षायाः समानफलतया देयत्त्वमभिदधानो विषमफलस्य चाऽदेयत्त्वमुपदर्शयन्निदमाह ॥

**देयाऽस्मै विधिपूर्वं सम्यक्तन्त्रानुसारतो दीक्षा । निर्व्वाणबीजमेषेत्यनिष्टफलदान्यथात्यन्तम् ॥ ६ ॥**

य०.देया दातव्याऽस्मै योग्याय विधिपूर्व्वं विधानपूर्व्वं सम्यगवैपरीत्त्येन तन्त्रानुसारतः शास्त्रानुसारतो दीक्षा व्रतरूपा निर्व्वाणस्य बीजं मोक्षसुखयोर्हेतुत्त्वेन । एषेति दीक्षैवानिष्टफलदा विपर्य्ययफला संसारफलाऽन्यथाऽयोग्याय दीयमानाऽत्यन्तमतिशयेनेति ॥ ६ ॥

उ० इत्थं दीक्षायाः फलसाम्ये आदेयत्त्वं तद्वैषम्ये चानादेयत्त्वमित्याह । देवेत्यादि । असै योग्याय विधिपूर्व सम्यगवैपरीत्येन तन्त्रस्य शास्त्रस्यानुसारतो दीक्षा देया इत्यमुना प्रकारेण योग्याय दीयमाना दीक्षा निर्व्वाणस्य मोक्षस्य बीजमन्यथाऽयोग्यदानेऽत्यन्तमतिशयेनानिष्टफलदा दुरन्तसंसारफला ॥ ६ ॥

का पुनरियन्दीक्षेत्याह ॥

देशसमग्राख्येयं विरतिर्न्यासोऽत्र तद्वति(च)सम्यक् । तन्नामादिस्थापनमविद्रुतं स्वगुरुयोजनतः ॥ ७ ॥

घ० देशाख्या समग्राख्या चेयं दीक्षा विरतिरुच्यते । देशविरतिदीक्षा सर्व्वविरतिदीक्षा चेत्यर्थः, न्यासो निक्षेपोऽत्र दीक्षायां व्रतन्यास इत्यर्थः । सा विद्यते यस्य स तद्वान् तस्मिंस्तद्वति च पुरुषे देशदीक्षावति सर्व्वदीक्षावति च सम्यक् समीचीनं सङ्गतं । तन्नामादिस्थापनं तेषां प्रवचनप्रसिद्धानां नामादीनां चतुर्ण्णां स्थापनमारोपणमविद्रुतं उपद्रवरहितमनुपप्लवमितियावत् । कथं तन्नामादिस्थापनम् । स्वगुरुयोजनतः स्वगुरुभिरात्मीयपूज्यैर्योजनं सम्बन्धनमौचित्त्येन यत्र तन्नामादीनान्ततः सकाशात् ॥ ७ ॥

उ० का पुनरियं दीक्षेत्याह । देशेत्यादि । देशाख्या समग्राख्या चेयं दीक्षा विरतिरुच्यते देशविरतिदीक्षा सर्व्वविरतिदीक्षा चेत्यर्थः । अत्र दीक्षायां न्यासो व्रतप्रतिज्ञाकालविहिताचारः तेषां प्रवचनप्रसिद्धानां नामादीनां चतुर्ण्णां स्थापनमारोपणमविद्रुतं विद्रवरहितमनुपप्लवमितियावत् । कथं तन्नामादिस्थापनं स्वगुरुभिर्योजनं स्वजीतानुरोधेन विधानं ततः॥७॥

कथं पुनर्विशिष्टनामन्यासस्य स्वगुरुभिः प्रसादीकृतस्य दीक्षानिमित्तत्वमिति मन्यमानं परं प्रत्याह ॥

नामनिमित्तं तत्त्वं तथा तथा चोद्धृतं पुरा यदिह । तत्स्थापना तु दीक्षा तत्त्वेनान्यस्तदुपचारः ॥ ८ ॥

य० नामनिमित्तं नामहेतुकं तद्भावस्तत्त्वं नामप्रतिपाद्यगुणात्मकत्वं । कृतप्रशान्तादिनाम्नः प्रशमादिरूपोपलम्भात् । तन्नाम्नि च तद्गुणस्मरणाद्युपलब्धेस्तथा तथा चोद्धृतं तेन तेन स्वरूपेणोद्धृतमुदूढम् कृतनिर्व्वाहं । पुरा पूर्व्वं यद्यस्मादिह प्रवचने मुनिभिः तत्स्थापना तु तस्यैव नाम्नः स्थापना तु स्थापनैव नामन्यास एव दीक्षा प्रस्तुता तत्त्वेन परमार्थेनाऽन्यस्तदुपचारोऽन्यक्रियाकलापस्तदुपचारस्तस्या दीक्षाया उपचारो वर्त्तते विद्योपचारात् ॥ ८ ॥

उ० नामन्यासस्य दीक्षानिमित्तत्त्वे को हेतुरित्यत आह । नामेत्यादि । यद् यस्मान्नामनिमित्तं नामहेतुकं तत्त्वं नामप्रतिपाद्यगुणवत्त्वहेतुकं प्रशान्ततादिजननाभिप्रायेणासकृतप्रशान्तादिनाम्नः प्रशमादिरूपोपलम्भात्तत्तन्नाम्नैव तत्तदभिप्रायस्मरणात्तत्तद्गुणानुकूलप्रवृत्त्या तत्तद्गुणसिद्धेस्तथा तथा च तेन तेन स्वरूपेणोद्धृतं कृतनिर्व्वाहमिह प्रवचने मुनिभिः । तस्मात् तत्स्थापनैव तत्त्वेन परमार्थेन दीक्षाऽन्यः क्रियाकलापस्तदुपचारो नामस्थापनारूपमुख्यदीक्षाकर्मणः पूर्वोत्तरभावेनाङ्गमात्ररूप इत्यर्थः ॥ ८ ॥

कस्मात्पुनर्न्नामादिन्यासे महानादरः क्रियत इत्याशङ्क्याह ॥

कीर्त्यारोग्यध्रुवपदसम्प्राप्तेः सूचकानि नियमेन । नागादीन्याचार्या वदन्ति तत्तेषु यतितव्यम् ॥ ९ ॥

य० कीर्त्तिः श्लाघा । आरोग्यं नीरुजत्वं प्राक्तनसहजौत्पातिकरोगविरहेण । ध्रुवं स्थैर्यं भावप्राधान्यान्निर्देशस्य । पदं

स्थानं विशिष्टपुरुषावस्थारूपमाचार्यत्त्वादि। कीर्त्तिश्चारोग्यं च ध्रुवं च पदं च कीर्त्यारोग्यध्रुवपदानि तेषां सम्प्राप्तिरपूर्व्वलाभस्तस्या अप्राप्तिपूर्विकायाः प्राप्तेः सूचकानि गमकानि नियमेनावश्यन्तया। नामस्थापनाद्रव्यभावरूपाण्याचार्याः पूज्या वदन्ति ब्रुवते। तत्तस्मात्तेषु नामादिषु यतितव्यं यत्नो विधेयः। इह चेदं तात्पर्य्यमवसेयमन्वर्थनाम्नो हि कीर्त्तनमात्रादेव शब्दार्थप्रतिपत्तेर्निदुषां प्राकृतजनस्य च मनःप्रसादात्कीर्त्तिराविर्भवति। यथा सुधर्म्मभद्रबाहुस्वामिप्रभृतीनामुत्तमपुरुषाणां प्रवचने कीर्त्तिरुदपादि। स्थापनाप्याकारवती रजोहरणमुखवस्त्रिकादिधारणद्वारेण भावगर्भप्रवृत्त्या आरोग्यमुपजनयति द्रव्यमप्याचारादिश्रुतं सकलसाधुक्रिया चाभ्यस्यमाना व्रतस्थैर्योपपत्तये प्रभवति। भावोऽपि सम्यग्दर्शनादिरूपः पूर्वोक्तपदाप्तये सम्पद्यते। नहि विशिष्टभावमन्तरेणागमोक्तविशिष्टपदावाप्तिर्भावितो भवति अथवा सामान्येनैव कीर्त्यारोग्यमोक्षसम्प्राप्तेः सूचकानि सर्व्वाण्येव नामादीनि ॥ ९ ॥

उ० एवं नामन्यासस्य दीक्षानिमित्तत्त्वं साधितं स्थापनादिन्यासस्य तु तत्त्वेऽविप्रतिपत्तिरेवेति नामादिचतुष्टयन्यासस्य दीक्षात्वात्पृथक्फलप्रदर्शनपूर्वं तत्रैव यत्नोपदेशमाह। कीर्तीत्यादि। कीर्त्तिः श्लाघाऽऽरोग्यं नीरुजत्त्वं प्राक्तनसहजौत्पातिकरोगविरहात् ध्रुवं स्थैर्यं भावप्रधाननिर्देशात्। पदं विशिष्टपुरुषावस्थारूपमाचार्यत्त्वादि तेषां सम्प्राप्तिरप्राप्तिपूर्विका प्राप्तिस्तस्याः सूचकानि गमकानि नियमेनावश्यन्तया नामादीनि नामस्थापनाद्रव्यभावरूपाण्याचार्याः पूज्या वदन्ति तत्तस्मात्तेषु नामादिषु यतितव्यं तदर्थानुकूल्येनात्यादरो विधेयः। अयं भावः। अन्वर्थनाम्नो हि कीर्त्तनमात्रादेव शब्दार्थप्रतीतेर्विदुषां प्राकृतजनस्य च मनःप्रसादात् बहुजनकृतगुणप्रवादरूपा कीर्त्तिराविर्भवति यथा सुधर्म्मभद्रबाहुप्रभृतीनां स्थाप-

नापि रजोहरणमुखवस्त्रिकाद्याकाररूपा धार्यमाणा भावगर्भप्रवृत्त्यारोग्यमुपजनयति द्रव्यमप्याचारादिश्रुतं साधुक्रिया चाभ्यस्यमाना व्रतस्थैर्योपपत्तये भवति भावोऽपि सम्यग्दर्शनादिरूपः प्रागुक्तपदावाप्तये सम्पद्यते भावाचार्यादिपदस्य विशिष्टभावनिमित्तत्वादथवा सर्व्वाण्येव नामादीनि सामान्येन कीर्त्त्यारोग्यमोक्षप्राप्तेः सूचकानि ॥ ९ ॥

किमिति दीक्षाप्रस्तावे नामादिषु यतितव्यमित्याशङ्क्याह ॥

**तत्संस्कारादेषा दीक्षा सम्पद्यते महापुंसः । पापविषापगमात् खलु सम्यग्गुरुधारणायोगात् ॥ १० ॥**

य० तत्संस्कारान्नामादिसंस्कारादेषा द्विविधा दीक्षा व्रतरूपा सम्पद्यते सम्भवति महापुंसो महापुरुषस्य न ह्यमहापुरुषा व्रतधारिणो भवन्ति । पापं विषमिव पापविषं तस्यापगमात् खल्वपगमादेव । पापविषयोर्व्वाऽपगमात् । विषापहारिणी दीक्षेति केषाञ्चित्प्रसिद्धिस्तदनुरोधादिदमुक्तम् । पापविषापगमादेव दीक्षेति सम्यगवैपरीत्त्येन गुरुश्च धारणा च गुरुधारणे ताभ्यां योगः सम्बन्धस्तस्माद्गुरुधारणायोगात् । गुरुयोगात्पापापगमो धारणायोगादेव विषापगम इति ॥ १० ॥

उ० नामादिषु यत्ने कृते दीक्षायां किमागतमित्यत आह । तदित्यादि । तेषां नामादीनां संस्कारादेषा द्विविधा दीक्षा व्रतरूपा सम्पद्यते महापुंसो दृढप्रतिज्ञस्य पापमेव विषं तस्यापगमात् खलु अपगमादेव विषापहारिणी दीक्षेति केषाञ्चित्प्रसिद्धिमनुरुध्येदमुक्तं सम्यगवैपरीत्येन गुरोः पापाहिगारुडिकस्याचार्यस्य धारणाऽयत्तत्वं तेन योगात् सम्बन्धात् ॥ १० ॥

दीक्षा सम्पद्यते महापुंस इत्युक्तं तत्सम्पत्तौ सर्व्वविरतस्य यद्भवति, तदाह ॥

**सम्पन्नायां चास्यां लिङ्गं व्यावर्णयन्ति समयविदः । धर्मैकनिष्ठतैव हि शेषत्यागेन विधिपूर्वम् ॥ ११ ॥**

य० सम्पन्नायां च सञ्जाताया चास्यां दीक्षाया लिङ्गं लक्षणं व्यावर्णयन्ति कथयन्ति. समयविद् आगमवेदिनः धर्म्मैकनिष्ठतैव हि धर्म्मतत्परतैव हि शेषत्यागेन धर्म्मादन्यः शेषस्तत्त्यागेन तत्परिहारेण विधिपूर्व्वं शास्त्रोक्तविधानपुरस्सरं यथा भवत्येवं शेषत्यागेन धर्म्मैकनिष्ठता सेवनीया नान्यथेतिभावः ॥ ११ ॥

उ० दीक्षासम्पत्तौ किं स्यादित्याह। सम्पन्नायामित्यादि सम्पन्नायां च सञ्जातायां चास्यां दीक्षायां लिङ्गं लक्षणं व्यावर्णयन्ति कथयन्ति समयविदः सिद्धान्तज्ञा एतदिति शेषः एतत्क्रियेत्यप्यध्याहार्य धर्मैकनिष्ठतैव हि धर्म्ममात्रप्रतिबद्धतैव हि शेषस्यानुपादेयस्य त्यागेन विधिपूर्वं शास्त्रनीत्या ॥ ११ ॥

अस्यामेव सर्व्वविरतिदीक्षायां क्षान्त्यादियोजनामार्याद्वयेनदर्शयति ॥

**वचनक्षान्तिरिहादौ धर्मक्षान्त्यादिसाधनं भवति। शुद्धं च तपो नियमाद्यमश्च सत्यं च शौचं च॥१२॥**
**आकिञ्चन्यं मुख्यं ब्रह्मापि परं सदागमविशुद्धम्। सर्वं शुक्लमिदं खलु नियमात्संवत्सरादूर्ध्वम् ॥१३॥**

य० वचनक्षान्तिरागमक्षान्तिरिह दीक्षायामादौ प्रथमं धर्म्मक्षान्त्यादिसाधनं भवति आदिशब्दात् धर्म्ममार्द्दवादिग्रहः। धर्म्मक्षान्त्यादीनां साधनं वचनक्षान्तिर्भवति, तत्पूर्व्वकत्वात्तेषां शुद्धं चाक्लिष्टं च तपो द्वादशभेदं नियमान्नियमेन यमश्च संयमश्च। सत्यं चाविसंवादनादिरूपं शौचं च बाह्याभ्यन्तरभेदम् ॥ १२ ॥ अकिञ्चनस्य भाव आकिञ्चन्यं, मुख्यं निरुपचरितम्। ब्रह्मापि ब्रह्मचर्य्यमपि, परं प्रधानं, सदागमविशुद्धं सदर्थप्रतिपादक आगमः सदागमस्तेन विशुद्धं निर्दोषं

सर्व्वं पूर्व्वोक्तं दशविधमपि क्षान्त्यादि शुक्लमिदं खलु निरतिचारमिदमेव नियमादितरव्यावृत्त्या शुक्लस्याऽशुक्लनिवर्त्तकत्वात् संवत्सरादूर्द्ध्वं क्रियामलत्त्यागेन संवत्सरकालात्त्ययेन शुक्लं भवतीति ॥ १३ ॥

उ० अस्यामेव सर्व्वविरतिदीक्षायां क्षान्त्यादियोजनामाह । वचनेत्यादि । आकिञ्चन्यमित्यादि । वचनक्षान्तिरागमक्षान्तिरिह दीक्षायामादौ प्रथमं धर्मक्षान्तेरादिसाधनं प्रधानकारणं भवति इदमुपलक्षणं तेनास्यामादौ वचनमार्दवादिकारणं भवतीति द्रष्टव्यं शुद्धं चाक्लिष्टं च तपो द्वादशभेदं नियमान्निश्चयेन यमश्च संयमश्च सत्यं चाविसंवादनादिरूपं शौचं च वाह्याभ्यन्तरभेदम् ॥ १२ ॥ आकिञ्चन्यं निष्किञ्चनत्त्वं वाह्याभ्यन्तरपरिग्रहत्यागरूपं मुख्यं निरुपचरितं ब्रह्मापि ब्रह्मचर्य्यमप्यष्टादशभेदशुद्धं परं प्रधानं सदागमो भगवद्वचनं तेन विशुद्धं निर्दोषं सर्वमिदं दशविधमपि क्षान्त्यादि शुक्लं निरतिचारं खलुशब्दो वाक्यालङ्कारे नियमान्निश्चयात्संवत्सरादूर्ध्वं वर्षपर्य्यायव्यतिक्रमे क्रियामलत्त्यागेन तदुत्तरं शुक्लीभवनस्वभावत्त्वात् ॥ १३ ॥

अस्यैव दीक्षावतः पूर्व्वोत्तरकालभाविगुणयोगमाह ॥

ध्यानाध्ययनाभिरतिः प्रथमं पश्चात्तु भवति तन्मयता । सूक्ष्मार्थालोचनया संवेगः स्पर्शयोगश्च॥१४॥

य० ध्यानं धर्म्यं शुक्लं च स्थिराध्यवसानरूपं, यथोक्तम् "एकालम्बनसंस्थस्य सदृशप्रत्ययस्य च । प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते" अध्ययनं स्वाध्यायपाठः ध्यानं चाध्ययनं च ध्यानाध्ययने । अध्ययनपूर्व्वकत्त्वेऽपि ध्यानस्याल्पाच्तरत्त्वादभ्यर्हणीयत्त्वाच्च पूर्व्वनिपातस्तयोरभिरतिरासक्तिरनवरतप्रवृत्तिः प्रथममादौ दीक्षासम्पन्नस्य पश्चात्तु पश्चात्पुनर्भ-

वति । तन्मयता तन्मयत्त्वं तत्परता सूक्ष्माश्च तेऽर्थाश्च वन्धमोक्षादयस्तेषामालोचना तया सूक्ष्मार्थालोचनया संवेगो मोक्षाभिलाषः स्पर्शयोगश्च स्पर्शस्तत्त्वज्ञानं तेन योगः सम्भवतीति ॥ १४ ॥

अस्यैव दीक्षावतः प्रागुत्तरकालभाविगुणयोगमाह । ध्यानेत्यादि । ध्यानं स्थिराध्यवसानरूपं धर्म्यं शुक्लं च यथोक्तम्- "एकालम्बनसंस्थस्य सदृशप्रत्ययस्यच । प्रत्ययान्तरनिर्मुक्तः प्रवाहो ध्यानमुच्यते" अध्ययनं स्वाध्यायपाठस्तयोरभिरतिरनवरतप्रवृत्तिः प्रथममादौ दीक्षासम्पन्नस्य भवति पश्चात्तु तन्मयता ध्येयगुणमयत्त्वं भवति तथा सूक्ष्मानामर्थानां वन्धमोक्षादीनामालोचनया संवेगो मोक्षाभिलाषः स्पर्शेन तत्त्वज्ञानेन योगः सम्बन्धश्च भवति ॥ १४ ॥

स्पर्शयोगश्चेत्युक्तं तत्र स्पर्शलक्षणमाह ॥

**स्पर्शस्तत्त्वाप्तिः संवेदनमात्रमविदितं त्वन्यत् । वन्ध्यमपि स्यादेतत्स्पर्शस्त्वक्षेपतत्फलदः ॥ १५ ॥**

य० स्पृश्यतेऽनेन वस्तुनस्तत्त्वमिति स्पर्शः । स च कीदृगित्याह तत्तत्त्वाप्तिस्तस्य तस्य वस्तुनो जीवादेस्तत्त्वं स्वरूपं तस्याप्तिरुपलम्भो ज्ञानं स्पर्श उच्यते, संवेदनमात्रं वस्तुस्वरूपपरामर्शशून्यमविदितं त्वन्यत् कथञ्चिद्वस्तुग्राहित्त्वेऽपि न विदितं वस्तु तदित्यविदितमुच्यते वन्ध्यमपि विफलमपि स्यादेतत्संवेदनमात्रं । स्पर्शस्तु स्पर्शः पुनरक्षेपतत्फलदोऽक्षेपेणैव तत्स्वसाध्यं फलं ददातीत्ययमनयोः स्पर्शसंवेदनयोर्विशेष इति ॥ १५ ॥

उ० स्पर्शस्य लक्षणं फलातिशयं चाह । स्पर्श इत्यादि तस्य विवक्षितस्य वस्तुनस्तत्त्वमनारोपितं रूपं तस्याप्तिरुपलम्भः स्पर्शः स्पृश्यतेऽनेन वस्तुवतत्त्वमिति निरुक्तेः अन्यत्त्वविदितं कथञ्चिद्वस्तुग्राहित्त्वेपि प्रमाणपरिच्छेद्यसंपूर्णार्थ(र्था)ग्राहित्त्वे-

नानिश्चितं संवेदनमात्रं तत्त्वपरामर्शशून्यमस्पर्शाख्यं ज्ञानमित्यर्थः। वन्ध्यमपि विफलमपि स्यादेतत् संवेदनमात्रं स्पर्शस्तु स्पर्शः पुनरक्षेपेणाविलम्बेन तत् स्वकार्यं फलं ददाति यः स तथा। अयमनयोः स्पर्शान्यज्ञानयोर्विशेषः ॥ १५ ॥

संवेगस्पर्शयोगेन दीक्षानान्यत्करोति तदाह ॥

**व्याध्यभिभूतो यद्वन्निर्विण्णस्तेन तत्क्रियां यत्नात्। सम्यक्करोति तद्वद्दीक्षित इह साधुसच्चेष्टाम्॥१६॥१२**

य० व्याधिना कुष्ठादिनाऽभिभूतो ग्रस्तो यद्वद्यथा। निर्विण्णो निर्वेदं ग्राहितस्तेन व्याधिना तत्क्रियां तच्चिकित्सां व्याधिप्रतीकाररूपां यत्नाद्यत्नेन, सम्यक्करोति विधत्ते, तद्वत्तथा दीक्षित इह प्रक्रमे साधूनां सच्चेष्टा विनयादिरूपा तां साधुसच्चेष्टाम् ॥ १६ ॥ १२ ॥

उ० संवेगस्पर्शयोगेन परिणतदीक्षाभावो यत्करोति तदाह। व्याधीत्यादि। व्याधिना कुष्ठादिनाऽभिभूतो ग्रस्तो यद्वा निर्विण्णो निर्वेदं ग्राहितस्तेन व्याधिना तस्य व्याधेः क्रियां प्रतिक्रियां यत्नादादरात्करोति तदाह सम्यगवैपरीत्येन तद्व-त्तथा दीक्षित इह प्रक्रमे साधूनां सच्चेष्टां विनयादिरूपाम् ॥ १६ ॥ १२ ॥

## ॥ इति द्वादशं षोडशकम् ॥

---

साधुसच्चेष्टां सम्यक्करोतीत्युक्तं तामेवोपदर्शयितुमाह ॥

**गुरुविनयः स्वाध्यायो योगाभ्यासः परार्थकरणं च। इतिकर्त्तव्यतया सह विज्ञेया साधुसच्चेष्टा ॥ १ ॥**

य० गुरुविनयो वक्ष्यमाणः शोभनमभिव्याप्त्याऽध्ययनं स्वाध्यायः स्वकीयमध्ययनं वा अयमभिधास्यमान एव योगो ध्यानं तस्याऽभ्यासः परिचयोयमपि वक्ष्यमाणस्वरूप एव । परस्यार्थे उपकारस्तत्करणं च वक्ष्यमाणं इति कर्त्तव्यतया अभिधायिष्यमाणस्वरूपया सह सार्द्धं विज्ञेया वेदितव्या साधूनां सच्चेष्टा साधुसच्चेष्टा ॥ १ ॥

उ० दीक्षितः साधुः सच्चेष्टां सम्यक्करोतीत्युक्तं तामेवोपदर्शयति । गुरुविनय इत्यादि । गुरुविनयादिरूपा पञ्चविधा साधूनां सच्चेष्टा शोभनवाह्यव्यापाररूपा विज्ञेया ॥ १ ॥

गुरुविनयस्वरूपमाह ॥

औचित्याद्गुरुवृत्तिर्बहुमानस्तत्कृतज्ञताचित्तम् । आज्ञायोगस्तत्सत्यकरणता चेति गुरुविनयः ॥ २ ॥

य० औचित्यादौचित्त्येन पुरुषभूमिकापेक्षया गुरुवृत्तिर्गुरुषु वर्त्तनं वैयावृत्त्यद्वारेण बहुमान आन्तरःप्रीतिविशेषो भावप्रतिबन्धः सदन्तःकरणलक्षणो न मोहो मोहो हि ससङ्गप्रतिपत्तिरूपः शास्त्रे निवार्यते । गुरुषु गौतमस्नेहप्रतिबन्धन्यायेन तस्य मोक्षं प्रत्यनुपकारकत्त्वात् । मोक्षानुकूलस्य तु भावप्रतिबन्धस्यानिषेधात्ततः सकलकल्याणसिद्धेः यो हि गुरुकृतमुपकारमात्मविषयं विशिष्टविवेकसम्पन्नतया जानाति । यथाऽस्मास्वनुग्रहप्रवृत्तैः स्वकीयक्लेशनिरपेक्षतया रात्रिन्दिवं महान् प्रयासः शास्त्राध्ययनपरिज्ञानविषयः प्रभूतं कालं यावत्कृत इति स कृतज्ञ उच्यतेऽथवाल्पमप्युपकारं भूयांसं मन्यतेऽथवा कृताकृतयोर्लोकप्रसिद्धयोर्विभागेन कृतस्य मतिपाटवाद्विशेषविषयं स्वरूपं परिच्छिनत्ति, न पुनर्जडतया कृतमपि साक्षात्प्रणालिकया वा न वेत्ति ततस्तद्भावः कृतज्ञता तेषु गुरुषु कृतज्ञतासहितं चित्तं तत्कृतज्ञताचित्तं । आज्ञायोगः

आज्ञानियोगः शासनं यथा राजाज्ञा राजशासनं तस्यां योग उत्साहस्तया वा आज्ञया योगः सम्बन्धः। आज्ञां दत्तां न विफलीकर्तुमिच्छति। तत्सत्यकरणता चेति तेषां गुरूणां सत्यकरणता यत्तैरुक्तं तत्तथैव तेषु विद्यमानेषु स्वर्भूयमापन्नेषु वा सम्पादयत्येवं तद्वचः सत्यं कृतं भवति। इति गुरुविनयः, एवमेते सर्वेऽपि प्रकारा औचित्याद्गुरुवृत्त्यादयो गुरुविनयो भवति प्रागुक्तः ॥ २ ॥

उ० तत्र गुरुविनयस्वरूपमाह। औचित्यादित्यादि। औचित्यादूर्द्ध्वभूमिकापेक्षया गुरुवृत्तिर्गुरुविषयः स्वजनवैयावृत्त्यप्रतियोगित्त्वसम्बन्धेन गुरुवृत्तिर्वा बहुमान आन्तरः प्रीतिविशेषो गुणरागात्मा न मोहोदयात् मोहो हि सत्स(स)ङ्गप्रतिपत्तिरूपः शास्त्रे निवार्यते गुरुषु गौतमस्नेहप्रतिबन्धन्यायेन तस्य मोक्षं प्रत्यनुपकारकत्त्वात् मोक्षानुकूलस्य तु गुरुभावप्रतिबन्धस्यानिषेधात्ततः सकलकल्याणसिद्धेः तथा तेषु गुरुषु कृतज्ञताचित्तं यथास्मास्वनुग्रहप्रवृत्तैर्भगवद्भिः स्वखेदमनपेक्ष्य रात्रिन्दिवं महान् प्रयासः शास्त्राध्यापनादौ कृत इति। तथाज्ञया गुरुनिर्देशेन योगः कार्यव्यापकत्त्वसम्बन्धः सर्वत्र कार्ये गुर्वाज्ञापुरस्कारित्त्वमितियावत् सत्यं च तत्करणं च सत्त्यकरणं तस्याज्ञायोगस्य सत्त्यकरणं तत्सत्त्यकरणं तदेव तत्ता स्वार्थे तल् आज्ञाफलसम्पादकत्वमितियावदित्येष सर्वोऽपि गुरुविनयः गुरुप्रीत्यर्थबाह्यव्यापारत्त्वात् ॥ २ ॥

अधुना स्वाध्यायमाह ॥

**यत्तु खलु वाचनादेरासेवनमत्र भवति विधिपूर्वम्। धर्मकथान्तं क्रमशस्तत्स्वाध्यायो विनिर्दिष्टः ॥ ३ ॥**

य० यत्तु यत्पुनः खलुशब्दो वाक्यालङ्कारे वाचनादेर्वाचनाप्रश्नानुप्रेक्षादेरासेवनमभिव्याप्त्या मर्यादया वा प्रवचनो-

शास्त्रेषु । यथोक्तम् । "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि"। (पातञ्जलयो. पा २-२९)॥४॥

उ० योगाभ्यासमाह । स्थानेत्यादि । स्थीयते अनेनेति स्थानमासनविशेषः कायोत्सर्गपर्यङ्कबन्धादिरूपः । उर्णः शब्दः । अर्थस्तदभिधेयमालम्बनं बाह्यो विषयः प्रतिमादिस्तस्मादालम्बनादन्योऽनालम्बन इति यावत् तेषां परिभावनं सर्व्वतोऽभ्यसनं सम्यक् समीचीनं परं तत्त्वं मोक्षलक्षणं योजयति यत्तत्तथा एतद् योगाभ्यास इति तत्त्वविदो विदन्ति योगस्य ध्यानरूपस्याभ्यास इति कृत्वा । यदि चित्तवृत्तिनिरोधो योगलक्षणं तदा स्थानादीनां योगाङ्गत्त्वेपि योगत्त्वोपचारो यदि च मोक्षयोजकव्यापारित्त्वमात्रं तदा नोपचार इति ध्येयम् ॥ ४ ॥

परार्थकरणमाह ॥

विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्व्वं परार्थकरणं यतेर्ज्ञेयम् ॥ ५ ॥

य० विहितानुष्ठानपरस्य शास्त्रविहितासेवनपरस्य तत्त्वतः परमार्थेन योगशुद्धिसचिवस्य मनोवाक्कायविशुद्धिसहितस्य भिक्षाटनादि भिक्षाटनवस्त्रपात्रैषणादि सर्व्वमनुष्ठानं परार्थकरणं परोपकारकरणं, यतेः साधोर्ज्ञेयं ज्ञातव्यं भवत्याहारवस्त्रपात्रादि यतिना गृह्यमाणस्य दातृणां पुण्यबन्धनिमित्तत्त्वात् तस्य च साधुहेतुकत्त्वादिति ॥ ५ ॥

उ० परार्थकरणमाह । विहितेत्यादि । विहितं शास्त्रोक्तं यदनुष्ठानं तत्परस्य तन्निष्ठस्य तत्त्वतः परमार्थेन योगशुद्धिसचिवस्य विशुद्धमनोवाक्काययोगस्य भिक्षाटनादि आहारैषणादि आदिना वस्त्रपात्रैषणादिग्रहः सर्व्वं निरवशेषमनुष्ठानं

यतेः साधोः परार्थकरणं ज्ञेयं यतिना गृह्यमाणस्याहारवस्त्रपात्रादेर्दातुः पुण्यनिबन्धनत्वेन परोपकारहेतुत्वाद्विशुद्धयोगप्रवृत्तेश्चोचितप्रवृत्तिहेतुसामायिकशक्त्या तदर्थिना नियतत्वादिति द्रष्टव्यम् ॥ ५ ॥

इति कर्त्तव्यतामाह ॥

**सर्वत्रानाकुलता यतिभावाव्ययपरा समासेन । कालादिग्रहणविधौ क्रियेतिकर्त्तव्यता भवति ॥ ६ ॥**

य० सर्व्वत्र सर्वस्मिन्ननाकुलता निराकुलता अत्वरा यतेर्भावः सामायिकरूपस्तस्याऽव्ययपरा व्ययाभावनिष्ठा । अनाकुलतया यतिभावाव्ययपरा न किञ्चिद्यतिभावाद्व्येत्यपगच्छतीति कृत्वा तथोच्यते । विशेष्यत्वात् क्रियाऽभिसम्बध्यते । समासेन सङ्क्षेपेण कालादिग्रहणविधौ कालस्वाध्यायादिग्रहणविधिविषया । क्रिया चेष्टा स्वशास्त्रप्रसिद्धा इतिकर्त्तव्यता भवति इत्येवंरूपा कर्त्तव्यानां भावः कर्त्तव्यतोच्यते ॥ ६ ॥

उ० इतिकर्त्तव्यतामाह । सर्वेत्यादि । सर्वत्र सर्व्वस्मिन् कालादिग्रहणविधौ कालस्वाध्यायादिग्रहणाचारे कालविभागप्रतिनियते क्रिया योगप्रवृत्तिः समासेन सङ्क्षेपेणेतिकर्त्तव्यता भवति रात्रिन्दिवनियतक्रमशुद्धक्रियासन्तानस्येतिकर्त्तव्यतापदार्थत्वात्कीदृशी साऽनाकुलतयाऽत्वरया यतिभावस्य सामायिकरूपस्याव्ययपराऽव्ययगमनिष्ठा बहुकालसाध्यक्रियायां त्वरया ह्यप्रमत्तत्वलक्षणो यतिभावो व्येतीत्येतद्विशेषणमुक्तम् ॥ ६ ॥

उक्ता साधुसच्चेष्टाऽधुना तद्वतो मैत्र्यादिसिद्धिमाह ॥

**इति चेष्टावत उच्चैर्विशुद्धभावस्य सद्यतेः क्षिप्रम् । मैत्रीकरुणामुदितोपेक्षाः किल सिद्धिमुपयान्ति ॥७॥**

य० इत्येनमुक्तप्रकारेण चेष्टावतः साधुचेष्टायुक्तस्य उच्चैरत्यर्थं विशुद्धभावस्य विशुद्धाध्यवसायस्य सद्यतेः सत्साधोः क्षिप्रमचिरेणैव मैत्रीकरुणामुदितोपेक्षाः पूर्वोक्ताश्चतस्रो भावनाः किल सिद्धिमुपयान्ति किलेत्याप्तागमवादो निष्पत्तिं प्रतिलभन्ते ॥ ७ ॥

उ० उक्ता साधुसच्चेष्टाऽथ तद्वतो मैत्र्यादिसिद्धिमाह । इतीत्यादि । इत्युक्तप्रकारेण चेष्टावतः प्रवृत्तिमत उच्चैरत्यर्थं विशुद्धयोगस्य विशुद्धभावस्य सद्यतेरप्रमत्तसाधोः क्षिप्रमचिरेणैव मैत्रीकरुणामुदितोपेक्षाः पूर्वोक्ताश्चतस्रो भावनाः सिद्धिमुपयान्ति सिद्धत्त्वाख्यं विशेषं लभन्ते किलेत्याप्तागमवादः ॥ ७ ॥

अधुनैतद्गतमेवाह ॥

एताश्चतुर्विधाः खलु भवन्ति सामान्यतश्चतस्रोऽपि । एतद्भावपरिणतावन्ते मुक्तिर्न तत्रैताः ॥ ८ ॥

य० एता मैत्राद्याश्चतुर्व्विधाश्चतुष्प्रकाराः खलुशब्दो वाक्यालङ्कारे । भवन्ति जायन्ते । सामान्यतः सामान्येन चतस्रोऽपि प्रस्तुताः । एतासां भावपरिणतिर्विशिष्टस्वरूपलाभस्तस्यां सत्यामन्ते पर्यवसाने प्रकर्षप्राप्तौ मुक्तिर्निर्वृत्तिर्न तत्रैतास्तस्यां मुक्तौ नैताः सम्भवन्ति सांसारिकभावोत्तीर्णरूपत्त्वान्मुक्तेः ॥ ८ ॥

उ०·एतद्गतमेव विशेषमाह एता इत्यादि एता मैत्र्याद्याश्चतुर्विधाश्चतुर्भेदाः । खलुर्वाक्यालङ्कारे भवन्ति सामान्यतः सामान्येन चतस्रोऽपि प्रस्तुताः एतासां भावपरिणतौ विशिष्टस्वरूपलाभेऽन्ते सर्वोत्कर्षे सति मुक्तिर्निर्वृत्तिर्भवति तत्र मुक्तावेता मैत्र्याद्या न सम्भवन्ति मुक्तेः सांसारिकभावोत्तीर्णरूपत्त्वात् ॥ ८ ॥

एताश्चतुर्विधा इत्युक्तं तदेव चातुर्व्विध्यं प्रत्येकमभिधातुमाह ॥

**उपकारिस्वजनेतरसामान्यगता चतुर्विधा मैत्री । मोहासुखसंवेगान्यहितयुता चैव करुणेति ॥ ९ ॥**

य० उपकारी च स्वजनश्चेतरश्च सामान्यं च । एतद्गता एतद्विषया चतुर्व्विधा चतुर्भेदा मैत्री भवति । उपकर्तुं शीलमस्येत्युपकारी उपकारं विवक्षितपुरुषसम्बन्धिनमाश्रित्य या मैत्री लोके प्रसिद्धा सा प्रथमा । स्वकीयो जनो नालप्रतिबद्धादिस्तस्मिन्नुपकारमन्तरेणापि स्वजन इत्येव या मैत्री तदुद्धरणादिरूपा प्रवर्त्तते सा द्वितीया। इतरः प्रतिपन्नः पूर्वपुरुषप्रतिपन्नेषु वा स्वजनसम्बन्धनिरपेक्षा या मैत्री सा तृतीया। सामान्ये सामान्यजने सर्व्वस्मिन्नेवाऽपरिचितेऽपि हितचिन्तनरूपा प्रतिपन्नत्वसम्बन्धनिरपेक्षा चतुर्थी मैत्री । मोहश्चासुखं च संवेगश्चान्यहितं च तैर्युता चैव समन्विता चैव करुणेति करुणा भवति । मोहोऽज्ञानं तेन युता ग्लानापथ्यवस्तुमार्गणप्रदानाभिलापरूपा प्रथमा । असुखं सुखाभावो यस्मिन् प्राणिनि दुःखिते सुखं नास्ति तस्मिन्याऽनुकम्पा लोकप्रसिद्धा आहारवस्त्रशयनासनादिप्रदानलक्षणा सा द्वितीया । संवेगो मोक्षाभिलापस्तेन सुखितेष्वपि सत्त्वेषु प्रीतिमत्तया सांसारिकदुःखपरित्राणेच्छा छद्मस्थानां या स्वभावतः प्रवर्त्तते सा तृतीया । अन्यहितयुता सामान्येनैव प्रीतिमत्तासम्बन्धविकलेष्वपि सर्व्वेष्वेवान्येषु सत्त्वेषु केवलिनामिव भगवतां महामुनीनां सर्व्वानुग्रहपरायणा हितवुद्ध्या चतुर्थी करुणा ॥ ९ ॥

उ० उक्तमेव प्रत्येकं चातुर्विध्यं विवृण्वन्नाह उपकारीत्यादि । उपकारी च स्वजनश्चेतरश्च सामान्यं च एतद्गता चतुर्विधा चतुर्भेदा मैत्री भवति । तत्रोपकर्तु शीलमस्येत्युपकारी तत्कृतमुपकारमपेक्ष्य या मैत्री लोके प्रसिद्धा सा प्रथमा ।

स्वकीयो जनो नालप्रतिबद्धादिस्तस्मिन्नुपकारमनपेक्ष्यापि स्वजनबुद्ध्यैव या मैत्री सा द्वितीया। इतर उपकारिस्वजनभिन्नः परिचितो गृह्यते सामान्यस्य पृथग्ग्रहणात्तत्र पूर्वपुरुषप्रतिपन्नसम्बन्धे स्वप्रतिपन्नसम्बन्धे वोक्तनिमित्तद्वयनिरपेक्षा या मैत्री सा तृतीया सामान्ये सर्वस्मिन्नेव जने परिचितापरिचितसाधारण्येनोक्तनिमित्तत्रयनिरपेक्षा या मैत्री सा चतुर्थी। मोहश्चासुखं च संवेगश्चान्यहितं च तैर्युता चैव करुणा भवति। मोहोऽज्ञानं तेन युता ग्लानयाचितापथ्यवस्तुप्रदानाभिलापसदृशी प्रथमाऽसुखं सुखाभावः स यस्मिन् प्राणिन्यस्ति तस्मिन् या लोकसिद्धाहारवस्त्रासनादिप्रदानलक्षणा सा द्वितीया। संवेगो मोक्षाभिलापस्तेन सुखितेष्वपि सत्त्वेषु सांसारिकदुःखत्याजनेच्छया छद्मस्थानां स्वभावतः प्रीतिमत्तया प्रवर्त्तते सा तृतीया। या त्वन्यहितेन प्रीतिमत्तासम्बन्धविकलसर्वसत्त्वहितेन केवलिनामिव भगवतां महामुनीनां सर्वानुग्रहपरानुकम्पा सा चतुर्थी ॥ ९ ॥

सुखमात्रे सद्धेतावनुबन्धयुते परे च मुदिता तु। करुणानुबन्धनिर्वेदतत्त्वसारा ह्युपेक्षेति ॥ १० ॥

य० सुखमात्रं सामान्येनैव वैषयिकं यदपथ्याहारतृप्तिजनितपरिणामासुन्दरपरि(सुख)कल्पं स्वपरजीवप्रतिष्ठितं तस्मिन् प्रथमा मुदिता। सतः शोभनस्य परिणामसुन्दरस्य। हितमिताहारपरिणामजनितस्येव परिहृष्टस्येहलोकगतस्य सुखस्य यो हेतुस्तथाविधाहारपरिभोगजनितस्वादुरसास्वादसुखकल्पः स्वपरगतस्तस्मिन् सद्धेतावैहलौकिके सुखविशेषे द्वितीया। अनुबन्धः सन्तानोऽव्यवच्छिन्नसुखपरम्परया देवमनुजजन्मसु कल्याणपरम्परारूपस्तेन प्रयुज्यते। सुखे परभवेहभवापेक्षया। आत्मपरापेक्षया च तृतीया। परं प्रकृष्टं मोहक्षयादिसम्भवमव्याबाधं च यत्सुखमनवद्यंशाश्वतं च तस्मिन् चतुर्थी मुदिता। करुणा

चानुवन्धश्च निर्वेदश्च तत्त्वं च एतानि सारो यस्या उपेक्षायाः सा तथोक्ता । करुणासाराऽनुवन्धसारा निर्व्वेदसारा तत्त्वसारा चेति चतुर्व्विधोपेक्षा । करुणा घृणा सा चेहातुरापथ्यासेवनविषया तथाह्यातुरस्य स्वातन्त्र्यादपथ्यं सेवमानस्य तन्निवारणमवधीर्योपेक्षां करोति । यद्यप्यसावहितमासेवत इति जानाति तथापि न निवारयतीयं करुणासारोपेक्षाऽनुवन्धः कार्यविषयः प्रवाहपरिणामस्तत्सारा यथा कश्चित्कुतश्चिदालस्यादेरर्थार्ज्जनादिषु न प्रवर्त्तते तं चाप्रवर्त्तमानमन्यदा तद्धितार्थी प्रवर्त्तयति विवक्षिते तु काले परिणामसुन्दरं कार्यसन्तानमवेक्षमाणो यदा माध्यस्थ्यमवलम्बते तदा तस्यानुवन्धसारोपेक्षा । निर्व्वेदो निर्व्विण्णता तत्सारा नारकतिर्यङ्नरामरभवेषु नानाविधानि दुःखानि वेदयतो जीवस्य कथंचिन्मनुजदेवगतिषु सर्व्वेन्द्रियोत्सवकरं संसारिसत्त्वाह्लादकं सुखविशेषमनुपश्यतोऽपि तदसारताकादाचित्कत्त्वाभ्यां तस्मिन्नुपेक्षां कुर्व्वाणस्य निर्व्वेदसारोपेक्षा । तत्त्वं परमार्थस्तद्भावस्तत्त्वमिति वस्तुस्वभावो वा तत्सारा मनोज्ञामनोज्ञानां वस्तूनां जीवाजीवात्मकानां परमार्थतो रागद्वेषानुत्पादकत्त्वेन स्वापराधमेव मोहादिकर्म्मविकारसमुत्थं भावयतस्तेषां स्वरूपवृत्तिव्यवस्थितानामपराधमपश्यतः सुखदुःखादिहेतुत्त्वाऽनाश्रयणान्माध्यस्थ्यमवलम्बमानस्य तत्त्वसारोपेक्षा निर्व्वेदाभावेऽपि भवतीति ॥ १० ॥

उ० सुखमात्र इत्यादि । सुखमात्रे सामान्येनैव वैषयिकेऽपथ्याहारतृप्तिजनितपरिणामासुन्दरसुखकल्पे स्वपरनिष्ठे प्रथमा मुदिता । सन् परिणामसुन्दरसुखजननशक्तिमान् हेतुर्यस्य तादृशे हितमिताहारपरिभोगजनितरसास्वादकसुखकल्पे स्वपरगतैहिकसुखविशेषे द्वितीयाऽनुवन्धो देवमनुजजन्मसु सुखपरंपराविच्छेदस्तेन युते लोकद्वयसुखे आत्मपरापेक्षया

तृतीया । परं प्रकृष्टं मोहक्षयादिसंभवं यत्सुखं तस्मिन् चतुर्थी मुदिता । करुणा चानुबन्धश्च निर्वेदश्च तत्त्वं च एतानि सारो यस्याः सा तथेत्यमुना प्रकारेण चतुर्विधोपेक्षा । करुणा मोहयुतकरुणा तत्सारोपेक्षा प्रथमा यथा कश्चिदातुरस्य स्वातन्त्र्यादपथ्यं सेवमानस्याहितं जानानोऽपि तन्निवारणमवधीर्योपेक्षां करोति मा भूदनुकम्पाभंग इति । अनुबन्धः फलसिद्धान्तः कार्यविपयः प्रवाहपरिणामस्तत्सारा द्वितीया । यथा कश्चित् कुतश्चिदालस्यादेरर्थार्ज्जनादौ न प्रवर्त्तते तं चाऽप्रवर्त्तमानमन्यदा तद्धितार्थी प्रवर्त्तयति विवक्षिते तु काले परिणामसुन्दरकार्यसन्तानमवेक्षमाणो माध्यस्थ्यमवलम्बत इति । निर्वेदो भववैराग्यं तत्सारा तृतीया यथा चतसृपु गतिपु नानाविधदुःखपरंपरामनुभवतो जीवस्य कथंचिन्मनुजदेवगतिपु सर्वेन्द्रियाह्लादकं सुखविशेपमनुपश्यतोऽपि तदसारताकादाचित्कत्त्वाभ्यां तस्मिन्नुपेक्षा, तत्त्वं वस्तुस्वभावस्तत्सारा चतुर्थी या मनोज्ञामनोज्ञानां वस्तूनां परमार्थतो रागद्वेपानुत्पादकत्त्वेन स्वापराधमेव मोहविकारसमुत्थं भावयतः स्वरूपव्यवस्थितवस्त्वपराधमपश्यतो वाह्यार्थेपु सुखदुःखहेतुतानाश्रयणान्माध्यस्थ्यमवलम्बमानस्य भवति ॥ १० ॥

केषां पुनरेताश्चतस्रो मैत्र्याद्याः परिणमन्तीत्याह ॥

**एताः खल्वभ्यासाक्रमेण वचनानुसारिणां पुंसाम् । सद्वृत्तानां सततं श्राद्धानां परिणमन्त्युच्चैः ॥ ११ ॥**

य० एताः प्रागुक्ताः खलुशब्दः पुनःशब्दार्थेऽभ्यासात्परिचयात्पुनः पुनरावृत्तेः क्रमेणानुपूर्व्या । वचनानुसारिणामागमानुसारिणां पुंसां मानवानां सद्वृत्तानां सच्चरित्राणां सततमनवरतं श्राद्धानां श्रद्धायुक्तानां परिणमन्त्यात्मसाद्भवन्ति उच्चैरत्यर्थम् ॥ ११ ॥

उ० केषां पुनरेताश्चतस्रः परिणमन्तीत्याह । एता इत्यादि । एताः प्रागुक्ताः खलु पुनः अभ्यासात्पुनः पुनरावृत्तेः क्रमेणानुपूर्व्या वचनानुसारिणामागमपुरस्कारिणां पुंसां पुरुषाणां सद्वृत्तानां सच्चरित्राणां सततमनवरतं श्राद्धानां श्रद्धायुक्तानां परिणमन्त्यात्मसाद्भवंत्युच्चैरत्यर्थम् ॥ ११ ॥

निष्पन्नयोगानां चित्तं किमेतत्सहितं नेत्याह ॥

**एतद्रहितं तु तथा तत्त्वाभ्यासात्परार्थकार्येव । सद्बोधमात्रमेव हि चित्तं निष्पन्नयोगानाम् ॥ १२ ॥**

य० एतद्रहितं तु मैत्र्यादिभावनारहितं तु । तथा तेनप्रकारेणेतरासंभविना तत्त्वाभ्यासात्परमार्थाऽभ्यासात्तत्स्वरूपाभ्यासाद्वा परार्थकार्येव परोपकारकरणैकशीलमेव । सद्बोधमात्रमेव हि निर्म्मलज्ञानमात्रमेव हि शेषदोषवियुक्तं चित्तं चेतनास्वभावं निष्पन्नयोगानां योगिविशेषाणां तु लिङ्गं चेदं"दोषव्यपायः परमा च वृत्तिरौचित्ययोगः समता च गुर्व्वी । वैरादिनाशोऽथ ऋतंभरा धीर्निष्पन्नयोगस्य तु चिह्नमेतत्" ॥ १२ ॥

उ० एतच्च योगारम्भकारब्धयोगान् प्रत्युक्तं, निष्पन्नयोगानां तु चित्तं कीदृशमित्याह । एतदित्यादि । एतद्रहितं तु निर्विकल्पसंस्कारेण मैत्र्यादिभावनानाशात्तद्रहितमेव तथा तेन प्रकारेणेतरासंभविना तत्त्वाभ्यासात्परमार्थाभ्यासात्प्रकृष्टभावनाजनिततद्विप्रमुक्ततत्त्वज्ञानादितरसंस्कारादित्यर्थः । परार्थकार्येव परोपकारैकशीलमेव सद्बोधो निर्मलज्ञानं तन्मात्रमेव हि शेषदोषरहितं चित्तं निष्पन्नयोगानां तल्लक्षणं चेदं"दोषव्यपायः परमा च वृत्तिरौचित्ययोगः समता च गुर्व्वी । वैरादिनाशोऽथ ऋतंभरा धीर्निष्पन्नयोगस्य तु चिह्नमेतत्" पूर्वलक्षणं चैतत् "अलौल्यमारोग्यमनिष्ठुरत्वं गन्धः शुभो मूत्र-

पुरीषमल्पम् । कान्तिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नम् । १ । मैत्र्यादियुक्तं विषयेषु चेतः प्रभाववद्धैर्यसमन्वितं च । द्वन्द्वैरधृष्यत्वमभीष्टलाभो जनप्रियत्वं च तथापरं स्यादिति" ॥ १२ ॥

अभ्यासाक्रमेण परिणमन्तीत्युक्तं स कथं शुद्धः केषां च भवतीत्याह ॥

**अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः । कुलयोग्यादीनामिह तन्मूलाधानयुक्तानाम्॥१३॥**

य० अभ्यासोऽपि परिचयोऽपि प्रायो वाहुल्येन प्रभूतजन्मानुगोऽनेकजन्मानुगतो भवति जायते शुद्धो निर्दोषः कुलयोग्यादीनां गोत्रयोगिव्यतिरिक्तानां कुलयोगिप्रवृत्तचक्रप्रभृतीनामिह प्रक्रमे तासां मैत्र्यादीनां मूलाधानं मूलस्थापनं, वीजन्यासस्तद्युक्तानां कुलयोगिलक्षणं चेदं । "ये योगिनां कुले जातास्तद्धर्म्मानुगताश्च ये । कुलयोगिन उच्यन्ते गोत्रवन्तोऽपि नापरे ॥ १ ॥ सामान्येनोत्तमा भव्या गोत्रयोगिनः सर्व्वत्राद्वेषिणश्चैते । गुरुदेवद्विजप्रियाः ॥ २ ॥ दयालवो विनीताश्च वोधवन्तो जितेन्द्रिया" इत्याद्यभिधानात् ॥ १३ ॥

उ० अभ्यासक्रमेण मैत्र्यादिपरिणतिर्भवतीत्युक्तं, स कथं शुद्धः केषां च स्यादित्याह । अभ्यासोऽपीत्यादि । अभ्यासोऽपि परिचयोऽपि प्रायो वाहुल्येन प्रभूतजन्मानुगो वहुतरभवानुवृत्तः शुद्धो निर्दोषो भवति शतक्षारपुटशोध्यरत्नन्यायेन कुलयोग्यादीनां गोत्रयोगिव्यतिरिक्तानां कुलयोगिप्रवृत्तचक्रप्रभृतीनामिह प्रक्रमे तासां मैत्र्यादीनां मूलाधानं मार्गानुसारिक्रियाजनितपुण्यानुवन्धिपुण्यलक्षणवीजन्यासस्तद्युक्तानां तत्र गोत्रयोगिनः "सामान्येनोत्तमा भव्याः सर्वत्राद्वेषिणः।" कुलयोगिनो "ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये।" प्रवृत्तचक्राश्च प्रवृत्तरात्रिन्दिवानुष्ठानसमूहा ज्ञेयाः॥१३॥

कस्य पुनरयमभ्यासः शुद्धो भवतीत्याह ॥

**अविराधनया यतते यस्तस्यायमिह सिद्धिमुपयाति । गुरुविनयश्रुतगर्भो मूलं चास्या अपि ज्ञेयः॥१४॥**

य० विराधना अपराधासेवनं तन्निषेधादविराधनया हेतुभूतया यतते प्रयत्नं विधत्ते यः पुरुषस्तस्य प्रयतमानस्यायमभ्यास इह प्रस्तुते सिद्धिमुपयाति सिद्धिभाग्भवति । गुरुविनयः प्रागुक्तः श्रुतगर्भ आगमगर्भो मूलं च कारणं चास्या अप्यविराधनाया ज्ञेयो ज्ञातव्यः ॥ १४ ॥

उ० केन प्रकारेण कस्यायमभ्यासः शुध्यतीत्याह । अविराधनयेत्यादि । अविराधनया अपराधपरिहारेण यः पुरुषो यतते प्रयत्नं विधत्ते तस्यायमभ्यास इह प्रक्रमे सिद्धिमुपयाति आज्ञाभङ्गभीतिपरिणामस्य तथाविधजीववीर्यप्रवर्द्धकत्त्वादस्या अप्यविराधनाया मूलं कारणं गुरुविनयः श्रुतगर्भ आगमसहितो ज्ञेयस्तेनाज्ञास्वरूपज्ञानसंभवात् ॥ १४ ॥

गुरुविनयस्य किं मूलमित्याह ॥

**सिद्धान्तकथा सत्सङ्गमश्च मृत्युपरिभावनं चैव । दुष्कृतसुकृतविपाकालोचनमथ मूलमस्यापि ॥ १५॥**

य० सिद्धान्तकथा स्वसमयकथा सत्सङ्गमश्च सत्पुरुषसंपर्कश्च । मृत्युपरिभावनं चैवावश्यंभावी मृत्युरिति यथोक्तं "नरेन्द्रचन्द्रेन्द्रदिवाकरेषु तिर्यङ्मनुष्यामरनारकेषु । मुनीन्द्रविद्याधरकिन्नरेषु स्वच्छन्दलीलाचरितो हि मृत्युः" । दुष्कृतानां पापानां सुकृतानां च पुण्यानां विपाकोऽनुभावस्तदालोचनं तद्विचारणं हेतुफलभावद्वारेण अथानन्तरं मूलं कारणमस्यापि गुरुविनयस्य सर्व्वमेतत्समुदितम् ॥ १५ ॥

उ० गुरुविनयस्य किं मूलमित्याह । सिद्धान्तेत्यादि । सिद्धान्तकथा स्वसमयप्रवृत्तिः सत्सङ्गमश्च सत्पुरुषसङ्गश्च मृत्योः परिभावनं चैव सर्वदा सार्वकपत्त्वादिरूपेण दुष्कृतानां पापानां सुकृतानां च पुण्यानां यो विपाकोऽनुभवस्तदालोचनं तद्विचारणं हेतुफलभावद्वारेणाथानन्तरं मूलं कारणमस्यापि गुरुविनयस्य सर्वमेतत्समुदितं एतदर्थसिद्धेर्गुरुविनयमूलत्त्वात् ॥ १५ ॥

अधुना गुरुविनयसहितस्य प्रतिपादितमूलस्यादेयतामुपदर्शयन्निदमाह ॥

**एतस्मिन् खलु यत्नो विदुषा सम्यक् सदैव कर्त्तव्यः । आमूलमिदं परमं सर्वस्य हि योगमार्गस्य ॥१६॥**

य० एतस्मिन् खलु एतस्मिन्नेव प्रागुक्ते सिद्धान्तकथादौ यत्न आदरो, विदुषा विचक्षणेन, सम्यक्सङ्गतः सदैव सर्व्वकालमेव कर्त्तव्यो विधेयः आमूलमभिव्याप्त्या कारणमिदं सिद्धान्तकथादि परमं प्रधानं सर्वस्य हि योगमार्गस्य सकलस्य योगवर्त्मनो यतो वर्त्तते ॥ १६ ॥ १३ ॥

उ० अस्यैव सर्वस्यादेयतामुपदर्शयन्नाह । एतस्मिन्नित्यादि । एतस्मिन् खल्वस्मिन्नेव प्रागुक्ते सिद्धान्तकथादौ यत्न आदरो विदुषा सुधिया सम्यक् समीचीनः सदैव कर्त्तव्य आमूलमभिव्याप्त्या कारणमिदं सिद्धान्तकथादि परमं सर्वस्य हि यतो योगमार्गस्य ॥ १६ ॥ १३ ॥

॥ इति त्रयोदशं षोडशकम् ॥

य० अष्ट च तानि पृथग्जनचित्तानि च। तेषां त्यागात्परिहारात् योगिकुलस्य चित्तं मनस्तद्योगेन तत्संबन्धि जिनरूपं परमात्मरूपं, ध्यातव्यं ध्येयं, योगविधौ योगविधानेऽन्यथा दोषोऽपराधः ॥ २ ॥

उ० कथं पुनर्जिनरूपं ध्यातव्यमित्याह। अष्टेत्यादि। अष्ट च तानि पृथग्जनचित्तान्ययोगिमनांसि तेषां त्यागात् योगिकुलस्य योगिपारंपर्य्यस्य चित्तं मनस्तद्योगेन तदभ्युपगमेन जिनरूपं परमात्मस्वरूपं ध्यातव्यं योगविधौ ध्यानाचारेऽन्यथा दोषोऽपराधो निरपेक्षवृत्तौ मानसातिचारस्यापि भङ्गरूपत्वात् ॥ २ ॥

तान्येव चाष्टौ चित्तान्याह ॥

खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गैः। युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान् ॥ ३ ॥

य० खेदः श्रान्तता क्रियास्वप्रवृत्तिहेतुः पथिपरिश्रान्तवत्, खेदाभावेऽप्युद्वेगः स्थानस्थितस्यैव उद्विग्नता, कुर्व्वाणोऽप्युद्विग्नः करोति न सुखं लभते, क्षेपः क्षिप्तचित्तता अन्तरान्तराऽन्यत्र न्यस्तचित्तवत्। उत्थानं चित्तस्याप्रशान्तवाहिता मनःप्रभृतीनामुद्रेकान्मदावष्टब्धपुरुषवत्। भ्रान्तिरतस्मिंस्तद्ग्रहरूपा शुक्तिकायां रजताध्यारोपवत्। अन्यमुद् अन्यहर्षः। रुग् रोगः। (इदं प्रतावदृष्टं) पीडा भङ्गो वा। आसंगोऽभिष्वङ्गः। खेदश्चोद्वेगश्च क्षेपश्चोत्थानं च भ्रान्तिश्चान्यमुच्च रुक्चासङ्गश्च तैर्युक्तानि हि संबद्धानि हि चित्तानि प्रस्तुतान्यष्ट प्रबन्धतः प्रबन्धेन वर्ज्जयेत्परिहरेन्मतिमान् बुद्धिमान् ॥ ३ ॥

उ० तान्येव त्याज्यान्यष्टौ चित्तान्याह। खेदेत्यादि। खेदः पथिपरिश्रान्तवत्पूर्वक्रियाप्रवृत्तिजनितमुत्तरक्रियाप्रवृत्तिप्रतिबन्धकं दुःखं। उद्वेगः कष्टसाध्यताज्ञानजनितमालस्यं यद्वशात्कायखेदाभावेऽपि स्थानस्थितस्यैव क्रियां कर्तुमनुत्साहो

जायते, कुर्वाणोऽपि ततो न सुखं लभत इति। क्षेपोऽन्तरान्तरान्यत्र चित्तन्यासः। उत्थानं चित्तस्याप्रशान्तवाहिता मदनप्रभृतीनामुद्रेकान्मदावष्टब्धपुरुषवत्। भ्रान्तिरतस्मिंस्तद्ग्रहरूपा शुक्तौ रजताध्यारोपवत्। अन्यमुत् प्रकृतकार्यान्यकार्यप्रीतिः। रुग् रोगः पीडा भङ्गो वाऽसङ्गः प्रकृतानुष्ठाने विहितेतरानुष्ठानप्रीत्यतिशयितप्रीतिः एतैर्युक्तानि हि संवद्धानि हि चित्तान्यष्ट प्रबन्धतः प्रवाहेन वर्ज्जयेत्परिहरेन्मतिमान् बुद्धिमान् ॥ ३ ॥

खेदादींश्चित्तदोषान् फलद्वारेणोपदर्शयन्नाह ॥

खेदे दार्ढ्याभावान्न प्रणिधानमिह सुन्दरं भवति। एतच्चेह प्रवरं कृषिकर्मणि सलिलवज्ज्ञेयम् ॥४॥

य० खेदे चित्तदोषे सति। दार्ढ्याभावाद्दृढत्त्वाभावान्न प्रणिधानमेकाग्र्यमिह प्रस्तुते योगे सुन्दरं भवति। एतच्च प्रणिधानं इह योगे प्रवरं प्रधानं कृषिकर्म्मणि धान्यनिष्पत्तिफले सलिलवज्जलवज्ज्ञेयम् ॥ ४ ॥

उ० उक्तानेव खेदादींश्चित्तदोषान् फलद्वारा विवृण्वन्नाह। खेद इत्यादि। खेदे चित्तदोषे सति दार्ढ्याभावात् क्रियासमाप्तिव्याप्तिस्थैर्याभावान्न प्रणिधानमेकाग्र्यमिह प्रस्तुते योगे सुन्दरं प्रधानं भवति। एतच्च प्रणिधानमिह योगे प्रवरं प्रधानं फलासाधारणकारणमित्यर्थः। कृषिकर्मणि धान्यनिष्पत्तिफले सलिलवज्जलवद् ज्ञेयम् ॥ ४ ॥

उद्वेगे विद्वेषाद्विष्टिसमं करणमस्य पापेन। योगिकुलजन्मबाधकमलमेतत्तद्विदामिष्टम् ॥ ५ ॥

य० उद्वेगे चित्तदोषे विद्वेषाद्योगविषयतो विष्टिसमं राजविष्टिकल्पं करणमस्य योगस्य पापेन हेतुभूतेन एतच्चैवंविधं

करणं । योगिनां कुले यज्जन्म तस्य बाधकभनेन योगिकुलजन्मापि जन्मान्तरे न लभ्यत इति कृत्वा योगिकुलजन्मबाधकमलमत्यर्थमेतत्तद्विदामिष्टं योगविदामभिमतम् ॥ ५ ॥

उ० उद्वेग इत्यादि । उद्वेगे चित्तदोषे जाते विक्षेपाद्योगविषयादस्य योगस्य कथञ्चित्करणं विच्छिरामं राजविच्छिकल्पं पापेन एतच्चैवंविधं करणं योगिनां कुले यज्जन्म तस्य बाधकम् । उद्विग्नः क्रियाकर्त्ता योगिकुलं जन्मान्तरे न लभत इति कृत्वाऽलमत्यर्थं तद्विदां योगविदामिष्टमभिमतम् ॥ ५ ॥

क्षेपेऽपि चाप्रबन्धादिष्टफलसमृद्धये न जात्वेतत् । नासकृदुत्पाटनतः शालिरपि फलावहः पुंसः ॥ ६ ॥

य० क्षेपेऽपि च चित्तदोषेऽप्रबन्धात्प्रबन्धत्वाभावाच्चित्तस्य इष्टफलसमृद्धये विवक्षितफलसमृद्ध्यर्थं योगनिष्पत्तये न जातु कदाचित्करणं चित्तं वा भवति । किमित्यन्यत्रान्यत्र चित्तप्रक्षेपे फलसमृद्धिर्न भवतीत्याह । नासकृदनेकशः । उत्पाटनादुत्खननाच्छालिरपि धान्यविशेषः फलावहः फलसंयुक्तः पुंसः पुरुषस्य यतो भवति ॥ ६ ॥

उ० क्षेपेऽपि चेत्यादि । क्षेपेऽपि चित्तदोषेऽप्रबन्धाच्चित्तस्य शिथिलमूलत्त्वादिष्टफलस्य योगनिष्पत्तिरूपस्य समृद्धयेऽभ्युदयाय न जातु कदाचिदेतत्करणं भवति । अत्र दृष्टान्तमाह । न असकृदनेकश उत्पाटनात् उत्खननाच्छालिरपि धान्यविशेषः फलावहः फलप्रदः पुंसः पुरुषस्य भवति ॥ ६ ॥

उत्थाने निर्वेदात्करणमकरणोदयं सदैवास्य । अत्यागत्यागोचितमेतत्तु स्वसमयेऽपि मतम् ॥ ७ ॥

य० उत्थाने चित्तदोषे सत्यप्रशान्तवाहितायां निर्वेदाद्धेतोः करणं निष्पादनमकरणोदयं भाविकालमाश्रित्याकरणस्ये-

वोदयो यस्मिन्निति तत्तथा सदैवास्य योगस्य, न विद्यते त्यागो यस्य कथञ्चिदुपादेयत्वात्तदत्यागं त्यागायोचितं योग्यमप्रशान्तवाहितादोषात् अत्यागं च तत्त्यागोचितं च अत्यागत्यागोचितमेवमेतत्तु एतत्पुनः करणमभिसम्बध्यते स्वसमयेऽपि स्वसिद्धान्तेऽपि मतमिष्टम् ॥ ७ ॥

उ० उत्थान इत्यादि । उत्थाने चित्तदोषे सत्यप्रशान्तवाहितया निर्वेदाद्धेतोःकरणं निष्पादनमायतिमाश्रित्याऽकरणस्यैवोदयो यस्मिंस्तत्तथा, सदैवास्य योगस्य, कीदृशं तत्करणं अत्यागमशक्यत्यागं बाह्यप्रतिज्ञाभङ्गस्य लोकापवादहेतुत्वात्तस्य च दुःसहत्वात्तथा त्यागायोचितं योग्यमप्रशान्तवाहितादोषविषमिश्रितत्वादेतत्त्वेतत्पुनः करणं स्वसमयेऽपि स्वसिद्धान्तेपि मतमभीष्टम्, अत एव गृहीतदीक्षस्य सर्वथा मूलोत्तरगुणनिर्वहणाभावे विधिना सुश्रावकाचारग्रहणमुपदर्श्यते अत्यागं कथंचिदुपादेयत्त्वात् त्यागोचितं च दोषत्त्वादिति व्याख्यायां तु भावविशेषकृतगुणदोषतुल्यभावो द्रष्टव्य इत्थमेव संविग्नपाक्षिकादिव्यवस्थासिद्धेरिति दिग् ॥ ७ ॥

**भ्रान्तौ विभ्रमयोगान्न हि संस्कारः कृतेतरादिगतः। तदभावे तत्करणं प्रक्रान्तविरोध्यनिष्टफलम्॥८॥**

य० भ्रान्तौ चित्तदोषे सति विभ्रमयोगान्मनोविभ्रमसम्बन्धान्न हि संस्कारो नैव वासनाविशेषः कृतेतरादिगतः इदं मया कृतमितरदकृतमादिशब्दादिदं मयोच्चरितमिदमनुच्चरितमेतद्गत एतद्विषयः । न हि मनोविभ्रमे कृतेतरादिसंस्कारो भवति । तदभावे संस्काराभावे तत्करणं तस्य प्रस्तुतस्य योगस्य करणं प्रक्रान्तविरोधि प्रस्तुतयोगविरोध्यनिष्टफलमिष्टफलरहितम् ॥ ८ ॥

उ० भ्रान्तावित्यादि । भ्रान्तौ चित्तदोषे सति विभ्रमस्य मनोवैकल्यस्य योगात्सम्बन्धान्नहि नैव संस्कारो वासनाविशेषः कृतेतरादिगतः इदं मया कृतमितरदकृतमादिशब्दादिदं मयोच्चरितमिदमनुच्चरितमेतद्गत एतद्विषयः विपरीतसंस्कारेण सत्यसंस्कारनाशात् । तदभावे कृतेतरादिसंस्काराभावे तस्य प्रस्तुतस्य योगस्य करणं प्रक्रान्तस्य योगस्य विरोध्यनिष्टफलमिष्टफलरहितं कृतेतरादिसङ्कलनसहितक्रियाया एवेष्टफलहेतुत्वात् । अथ यत्रोपेक्षयैव कृताकृतसंस्काराभावो नतु भ्रान्त्या तत्र कोऽयं दोष इति चेन्न भ्रान्तेरुपेक्षाया अप्युपलक्षणत्वात् ॥ ८ ॥

**अन्यमुदि तत्र रागात्तदनादरताऽर्थतो महापाया । सर्वानर्थनिमित्तं मुद्विषयाङ्गारवृष्ट्याभा ॥ ९ ॥**

य० अनुष्ठीयमानादन्यत्र मुत्प्रमोदस्तस्यां सत्यां चित्तदोषरूपायां तत्रान्यस्मिन्वा रागादभिलापातिरेकात्तदनादरता अनुष्ठीयमानाऽनादरभावोऽर्थतः सामर्थ्यात् । महापाया महानपायो यस्याः सकाशात्सा तथा सर्व्वानर्थनिमित्तं सर्वेषामनर्थानां हेतुस्तदनादरताभिसम्बध्यते मुद्विषयाङ्गारवृष्ट्याभा मुदो हर्षस्य विषयो यस्तस्मिन्नङ्गारवृष्ट्याभाऽङ्गारवृष्टिप्रतिच्छायाङ्गारवृष्टिसदृशी प्रमोदविषयार्थोपघातकारिणीत्यर्थः । इयं चान्यमुत्सुन्दरेष्वपि शास्त्रोक्तेषु चैत्यवन्दनास्वाध्यायकरणादिषु श्रुतानुरागाच्चैत्यवन्दनाद्यनाद्रियमाणस्य तत्करणवेलायामपि तदुपयोगाभावेनेतरत्रासक्तचित्तवृत्तेः सदोषा । न हि शास्त्रोक्तयोरनुष्ठानयोरयं विशेषः समस्ति यदुतैकमादरविषयोऽन्यदनादरविषय इति ॥ ९ ॥

उ० अन्यमुदीत्यादि । अनुष्ठीयमानादन्यत्र मुत्प्रमोदस्तस्यां सत्यां तत्रान्यस्मिन् रागादभिलापातिरेकात्तदनादरताऽनुष्ठीयमानानाद्रियमाणताऽर्थतः सामर्थ्यात्तक्रियाकालेऽन्यरागस्य तद्रागाक्षेपकत्त्वात्सा च तदनादरता महापाया महाध-

र्मविघ्नवती तथा सर्वेषामनर्थानां निमित्तं लेशतोऽपि विहितानुष्ठानानादरस्य दुरन्तसंसारहेतुत्त्वात्तदनादरदोषेऽप्यन्यादरगुणात्तुल्यायव्ययत्वमित्याशङ्कायामाह। मुद्विषये इतरानुष्ठानेऽङ्गारवृष्ट्याभाङ्गारवृष्टिसदृशी। अकालरागस्य तत्फलोपघातकत्वादितिभावः। इयं चान्यमुत्सुन्दरेष्वपि शास्त्रोक्तेषु चैत्यवन्दनस्वाध्यायादिषु श्रुतानुरागाच्चैत्यवन्दनादिकरणवेलायामपि तदनाद्रियमाणस्य तदुपयोगाभावेनेतरासक्तचित्तवृत्तेः सदोषा। नहि शास्त्रोक्तयोरनुष्ठानयोरयं विशेषोऽस्ति यदेकमादरणीयमन्यत्तु नेति ॥ ९ ॥

रुजि निजजात्युच्छेदात् करणमपि हि नेष्टसिद्धये नियमात्। अस्येत्यननुष्ठानं तेनैतद्वन्ध्यफलमेव॥१०॥

य० रुजि रोगे चित्तदोषे सति निजजात्युच्छेदादिति कोऽर्थः करणमपि हि। नेष्टसिद्धये नाभिमतफलनिष्पत्तये नियमान्नियमेनास्य प्रस्तुतस्यार्थस्य। इत्यननुष्ठानमितिहेतोरननुष्ठानमकरणं तेन कारणेनैतत्करणं वन्ध्यफलमेवेष्टफलाभावात्। इयं हि रुग्भङ्गरूपा पीडारूपा वाऽनुष्ठानजातेरुच्छेदकरणद्वारेण सर्व्वानुष्ठानानां वन्ध्यफलत्वापादनाय प्रभवति तेन सदोषा विवेकिना परिहर्त्तव्येति दर्शिता ॥ १० ॥

उ० रुजीत्यादि। रुजि रोगे चित्तदोषे सति निजजातेरनुष्ठानसामान्यस्योच्छेदात्करणमपि ह्यस्य प्रस्तुतार्थस्य नियमान्नेष्टसिद्धये नाभिमतसम्पादनाय इतिहेतोरननुष्ठानमकरणं तेन कारणेनैतत्करणं वन्ध्यफलमेवेष्टफलाभावादियं हि रुग्भङ्गरूपा पीडारूपा वाऽनुष्ठानजात्युच्छेदकत्वात्सर्वकृतानुष्ठानवन्ध्यत्वापादिकेति विवेकिना परिहर्त्तव्या, अथ भङ्गरूपायाः

पीडारूपाया वारुजः शक्तौ सत्यामपरिहारः पुरुषस्य स्वतन्त्रं, दोपान्तरं तत्र व्यापृतानामनुष्ठानानां तु कोऽपराध इति चेन्न, यदनुष्ठानव्यासङ्गेन पुरुषस्य रुक्परिहारोपायानुपयोगस्तत्र रुग्दोपस्य न्यायप्राप्तत्वात् ॥ १० ॥

आसङ्गेऽप्यविधानादसङ्गसक्त्युचितमित्यफलमेतत् । भवतीष्टफलदमुच्चैस्तदप्यसङ्गंयतः परमम् ॥ ११ ॥

य० आसङ्गेऽपि चित्तदोपे सति विधीयमानानुष्ठाने इदमेव सुन्दरमित्येवंरूपे । अविधानाच्छास्त्रोक्तविधेरभावात् । सक्तिरनवरतप्रवृत्तिर्न विद्यते सङ्गो यस्यां सेयमसङ्गाऽभिष्वङ्गाऽभाववती असङ्गा चासौ सक्तिश्च तस्या उचितं योग्यमिति कृत्वाऽफलमेतदिष्टफलरहितमेतदनुष्ठानं भवति जायते । इष्टफलदमिष्टफलसम्पादकमुच्चैरत्यर्थं तदपि शास्त्रोक्तमनुष्ठानमसङ्गमभिष्वङ्गरहितं यतो यस्मात्परमं प्रधानं, आसङ्गयुक्तं ह्यनुष्ठानं तन्मात्रगुणस्थानकस्थितिकार्यैव न मोहोन्मूलनद्वारेण केवलज्ञानोत्पत्तये प्रभवति तस्मात्तदर्थिना आसङ्गस्य दोषरूपता विज्ञेयेति ॥ ११ ॥

उ० आसङ्गेऽपीत्यादि । आसङ्गेऽपि चित्तदोपे सति विधीयमानेऽनुष्ठाने इदमेव सुन्दरमित्येवंरूपेऽविधानात्तद्भावपुरस्कारेण शास्त्रविध्यभावात्प्रत्युतानासङ्गभावं पुरस्कृत्य विधिप्रवृत्तेरसङ्गा सङ्गरहिता सक्तिरनवरतप्रवृत्तिस्तस्या उचितं योग्यमिति कृत्वाऽफलमिष्टफलरहितमेतदनुष्ठानं भवति यतो यस्मात्तदपि शास्त्रोक्तत्वेन प्रसिद्धमप्यनुष्ठानं परमं प्रधानमसङ्गमभिष्वङ्गरहितं उच्चैरतिशयेनेष्टफलदमिष्टफलसम्पादकं भवति आसङ्गयुक्तं ह्यनुष्ठानं गौतमगुरुभक्तिदृष्टान्तेन तन्मात्रगुणस्थानकस्थितिकार्येव न मोहोन्मूलनद्वारेण केवलज्ञानोत्पत्तये प्रभवति तस्मात्तदर्थिनासङ्गस्य दोपता ज्ञेयेति ॥ ११ ॥

एवमष्टपृथग्जनचित्तदोषान् प्रतिपाद्य तत्त्यागद्वारेण योगिचित्तमुपदर्शयन्नाह ॥

**एतद्दोषविमुक्तं शान्तोदात्तादिभावसंयुक्तम् । सततं परार्थनियतं संक्लेशविवर्जितं चैव ॥ १२ ॥**

य० एतद्दोषविमुक्तमष्टचित्तदोषवियुक्तं शान्तोदात्तादिभावसंयुक्तं शान्त उपशमवान् यथोक्तम्। "न यत्र दुःखं न सुखं न रागो न द्वेषमोहौ न च काचिदिच्छा । रसः स शान्तो विहितो मुनीनां, सर्वेषु भावेषु समः प्रदिष्टः॥१॥" उदात्त उदारो यतः उक्तम्। "अयं निजः परो वेति, गणना लघुचेतसाम्। उदारचरितानां तु, वसुधैव कुटुम्बकम्॥ १ ॥ आदिशब्दाद्गम्भीरधीरादिभावपरिग्रहस्तैः संयुक्तं समन्वितं सततमनवरतं, परार्थनियतं परोपकारनियतवृत्ति सङ्क्लेशविवर्जितं चैव सङ्क्लेशो विशुद्धि प्रतिपक्षः कालुष्यन्तेन विरहितं चैव ॥ १२ ॥

उ० एवमष्ट चित्तदोषानुक्त्वा तत्त्यागिचित्तस्वरूपमाह । एतदित्यादि । एतैरष्टभिश्चैत्तैर्दोषैर्वियुक्तं रहितं शान्तः क्रोधाद्यभाववान् उदात्तो निजपरगणनारूपलघुचित्ताभावेनोदासस्तदादिभावेनोदासस्तदादिभावेन संयुक्तं समन्वितमादिशब्दाद्गम्भीरधीरादिभावपरिग्रहः। सततमनवरतं परार्थनियतं परोपकारनियतवृत्ति सङ्क्लेशेन कालुष्येन विवर्जितं चैव ॥१२॥

**सुस्वप्नदर्शनपरं समुल्लसद्गुणगणौघमत्यन्तम् । कल्पतरुबीजकल्पं शुभोदयं योगिनां चित्तम्॥ १३ ॥**

य० सुस्वप्नदर्शनपरं शोभनाः स्वप्नाः सुस्वप्नाः श्वेतसुरभिपुष्पवस्त्रातपत्रचामरादयस्तद्दर्शनप्रवृत्तं समुल्लसन् गुणगणौघो गुणनिकरः प्रवाहो यस्मिंस्तत्समुल्लसद्गुणगणौघमत्यन्तमतिशयेन । कल्पतरुबीजकल्पं कल्पतरोर्बीजं स्वजनकं कारणं तेन तुल्यं शुभोदयं योगिनां चित्तं शुभउदयोऽस्येति शुभोदयम् ॥ १३ ॥

उ० सुस्वप्नेत्यादि । सुष्ठु शोभनाः श्वेतसुरभिपुष्पवस्त्रातपत्रचामरादयो ये स्वप्नाः स्वापज्ञेयास्तद्दर्शनपरं तद्दर्शनप्रवृत्तं समुल्लसन् गुणगणौघो गुणनिकरप्रवाहो यस्मिंस्तत्तथात्यन्तमतिशयेन कल्पतरोर्यद्बीजं तत्कल्पं तत्तुल्यं शुभ उदयो यस्य तत्तथा योगिनां चित्तं भवति ॥ १३ ॥

कस्य पुनरेवंविधं विशेषेण योगिनश्चित्तं भवतीत्याह ॥

**एवंविधमिह चित्तं भवति प्रायः प्रवृत्तचक्रस्य। ध्यानमपि शस्तमस्य त्वधिकृतमित्याहुराचार्याः ॥१४॥**

य० एवंविधमेवंस्वरूपमिह प्रक्रमे चित्तं मनो भवति सम्भवति प्रायो बाहुल्येन प्रवृत्तचक्रस्य प्रवृत्तरात्रिन्दिवानुष्ठानसमूहस्य योगिनो ध्यानमपि पूर्व्वोक्तस्वरूपं शस्तं प्रशस्तमस्य त्वस्यैव अधिकृतं प्रस्तुतमित्याहुराचार्याः सूरयो, ब्रुवते ॥१४॥

उ० कस्य पुनर्विशेषेणेदृग् चित्तं स्यादित्याह । एवंविधमित्यादि । एवंविधमेवंस्वरूपमिह प्रक्रमे चित्तं मनो भवति प्रायो बाहुल्येन प्रवृत्तचक्रस्य प्रवृत्तरात्रिन्दिवानुष्ठानसमूहस्य योगिनः शस्तं प्रशस्तं ध्यानमपि प्रागुक्तमस्य त्वस्यैवाधिकृतं सम्पन्नाधिकारमित्याहुराचार्या योगाचार्याः ॥ १४ ॥

कथं पुनस्तद्ध्यानं देशाद्यपेक्षया भवतीत्याह ॥

**शुद्धे विविक्तदेशे सम्यक्संयमितकाययोगस्य। कायोत्सर्गेण दृढं यद्वा पर्यङ्कबन्धेन ॥ १५ ॥**

य० शुद्धे शुचौ विविक्तदेशे जनाकीर्णादिरहिते सम्यगवैपरीत्येन संयमितकाययोगस्य नियमितसर्व्वकायचेष्टस्य कायोत्सर्गेण ऊर्द्ध्वस्थानरूपेण दृढमत्यर्थं, यद्वा पर्यङ्कबन्धेनासनविशेषरूपेण दृढमत्यर्थं, यद्वापर्य्यङ्कबन्धेनासनविशेषरूपेण ॥१५॥

उ० कथं पुनस्तद्ध्यानं देशाद्यपेक्षया भवतीत्याह । शुद्ध इत्यादि । शुद्धे शुचौ विविक्ते जनानाकीर्णे देशे सम्यगवैपरीत्येन संयमितकाययोगस्य नियमितसर्वकायचेष्टस्य कायोत्सर्गेणोर्द्ध्वस्थानरूपेण ॥ १५ ॥

साध्वागमानुसाराच्चेतो विन्यस्य भगवति विशुद्धम् । स्पर्शवेधात्तत्सिद्धयोगिसंस्मरणयोगेन ॥१६॥१४

य० साधु यथाभवत्येवमागमानुसारात्सिद्धान्तानुसारेण चेतश्चित्तं विन्यस्य निक्षिप्य भगवति जिने विशुद्धं विशुद्धिमत् स्पर्शस्तत्त्वज्ञानं तस्यावेधात्संस्कारात्तस्मिन्ध्याने सिद्धाः प्रतिष्ठिता लब्धात्मलाभा ये योगिनस्तेषां संस्मरणयोगः स्मरणव्यापारस्तेन । यो हि यत्र कर्म्मणि सिद्धस्तदनुस्मरणं तत्रेष्टफलसिद्धये भवति ॥ १६ ॥ १४

उ० साध्वित्यादि । साधु यथाभवत्येवमागमानुसारात् सिद्धान्तं पुरस्कृत्य चेतश्चित्तं विन्यस्य संस्थाप्य भगवति जिने विशुद्धं निर्दोषं स्पर्शस्य तत्त्वज्ञानस्य वेधात् दृढतरसंस्कारात्तस्मिन् ध्याने सिद्धा लब्धात्मलाभा ये योगिनस्तेषां संस्मरणं योगेन सामस्त्येन स्मरणव्यापारेण तद्ध्यानमिष्टफलदं भवति यो हि यत्र कर्मणि सिद्धस्तदनुस्मरणस्य तत्रेष्टफलदत्त्वात् ॥१६॥१४

॥ इति चतुर्दश षोडशकम् ॥

---

किं पुनस्तत्र ध्याने ध्येयमित्याह ॥

सर्वजगद्धितमनुपममतिशयसन्दोहसमृद्धिसंयुक्तम् । ध्येयं जिनेन्द्ररूपं सदसि गदत्तत्परं चैव ॥ १ ॥

य० सर्वजगत्प्राणिलोकोऽभिधीयते तस्मै हितं हितकारित्वात् हितकारित्वं च सदुपदेशनात् । न विद्यते उपमा शरी-

रसन्निवेशसौन्दर्यादिभिर्गुणैर्यस्य तदनुपमं अतिशयान् सन्दुग्धे प्रपूरयति यत्तदतिशयसन्दोहं यद्वा अतिशयसमूहसम्पन्नमितियावत् ऋद्धिसंयुक्तमृद्धयो नानाप्रकारा आमर्पौपध्यादयो लब्धयस्ताभिः संयुक्तं समन्वितं ध्येयं ध्यातव्यं जिनेन्द्ररूपं जिनेन्द्रस्वरूपं, सदसि सभायां, समवसरणे, गदद्व्याकुर्व्वाणं सर्व्वसत्त्वस्वभापापरिणामिन्या भापया तत्परं चैव तस्मादुक्तलक्षणाज्जिनेन्द्ररूपात्परं मुक्तिस्थं धर्म्मकायावस्थानन्तरभावि तत्त्वकायावस्थास्वभावं चैव ध्येयं भवति ॥ १ ॥

उ० किं पुनस्तत्र ध्याने ध्येयमित्याह । सर्वेत्यादि । सर्वस्मै जगते प्राणिलोकाय हितं हितकारि सदुपदेशनात् नास्त्युपमा सौन्दर्यादिगुणैर्यस्य तत्तथाऽतिशयान् सन्दुग्धे प्रपूरयति यत्तदऽतिशयसन्दोहमतिशयसन्दोहवद्वा ऋद्धयो नानाविधा आमर्पौपध्यादिलब्धयस्ताभिः संयुक्तं जिनेन्द्ररूपं ध्येयं सदसि सभायां गदत् सर्वसत्त्वस्वभापापरिणामिन्या भापया व्याकुर्वाणं तस्मादुक्तलक्षणाज्जिनेन्द्ररूपात्परं मुक्तिस्थं धर्मकायावस्थानन्तरभावि तत्त्वकायावस्थास्वभावं चैव ध्येयं भवति ॥ १ ॥

तत्राद्यं जिनेन्द्ररूपमधिकृत्य कीदृशं तद्ध्येयमित्याह ॥

**सिंहासनोपविष्टं छत्रत्रयकल्पपादपस्याधः । सत्त्वार्थसम्प्रवृत्तं देशनया कान्तमत्यन्तम् ॥ २ ॥**

य० सिंहोपलक्षितमासनं सिंहासनं देवनिर्मितं तत्रोपविष्टं सिंहस्य मृगाधिपतेरासनमवस्थानविशेषरूपमूर्जितमनाकुलं च तेनोपविष्टमितिवा आतपं छादयतीतिच्छत्रं, तेषां त्रयमुपर्युपरिष्टात्, कल्पपादपः कल्पद्रुमः,। छत्रत्रयं च कल्पपादपश्च तस्याधोधस्तात्, सत्त्वाः प्राणिनस्तेपामर्थ उपकारस्तस्मिन् सम्यक् प्रवृत्तं स्वगतपरिश्रमपरिहारेण देशनया धर्म्मकथया कान्तं कमनीयं मनोज्ञमत्यन्तमतिशयेन ध्येयमिति सम्बन्धः ॥ २ ॥

धारणप्रभावं सुरा देवाः सिद्धा विद्यामन्त्रसिद्धादयो योगिनो योगबलसम्पन्नास्तैर्व्वन्द्यं वन्दनीयं स्तुत्यं, वरेण्यशब्देनाभिधेयं वाच्यं वरेण्यशब्दाभिधेयं च जिनेन्द्ररूपं ध्येयमित्यभिसम्बध्यते ॥ ४ ॥

उ० निर्वाणेत्यादि । निर्वाणसाधनं परमपदप्रापकं भुवि पृथिव्यां भव्यानां योग्यानामग्र्यं प्रधानमतुलमाहात्म्यमसाधारणप्रभावं सुरा देवाः सिद्धा विद्यामन्त्रसिद्धादयो योगिनो योगबलसम्पन्नास्तैर्वन्द्यं वन्दनीयं वरेण्यशब्दैः अर्हच्छम्भुबुद्धपरमेश्वरादिभिरभिधेयं वाच्यं च जिनेन्द्ररूपं ध्येयमिति महावाक्यसम्बन्धः ॥ ४ ॥

एवमाद्यं सालम्बनध्यानमभिधाय तत्फलमभिधित्सुराह ॥

**परिणत एतस्मिन् सति सद्ध्याने क्षीणकिल्बिषो जीवः । निर्वाणपदासन्नः शुक्लाभोगो विगतमोहः ॥५॥**

य० परिणते सात्मीभूते एतस्मिन्सति प्रस्तुते । सुध्याने शोभनध्याने । क्षीणकिल्बिषः क्षीणपापो जीव आत्मा निर्व्वाणपदस्यासन्नः प्रत्यासत्तिमान् शुक्लाभोगः शुक्लज्ञानोपयोगो विगतमोहोऽपगतमोहनीयः ॥ ५ ॥

उ० एवमाद्यं सालम्बनध्यानमभिधाय तत्फलमभिधित्सुराह । परिणत इत्यादि । परिणते प्राप्तप्रकर्षे एतस्मिन् प्रस्तुते सद्ध्याने शोभनध्याने सति क्षीणकिल्बिषः क्षीणपापो जीव आत्मा निर्वाणपदस्यासन्नो निकटवर्त्ती शुक्लाभोगः शुक्लज्ञानोपयोगः विगतमोहोऽपगतमोहनीयः ॥ ५ ॥

**चरमावञ्चकयोगात्प्रातिभसञ्जाततत्त्वसंदृष्टिः । इदमपरं तत्त्वं तद्यद्वशतस्त्वस्त्यतोऽप्यन्यत् ॥ ६ ॥**

य० चरमावञ्चकयोगात्फलावञ्चकयोगात्प्रागुक्तात् प्रतिभा मतिस्तत्र भवं प्रातिभं प्रतिभैव वा प्रातिभं तेन सञ्जाता

स्वरूपं सर्व्वदा समुपलभ्यते नेतरत् तदेन परमात्मस्वरूपं परं प्रकृष्टं मतमभिप्रेतं ब्रह्म महत् बृहत्तमं न ततोऽन्यदस्ति तद्योगात्परतत्त्वयोगात्, अस्यापि हि परतत्त्वविषयध्यानविशेषस्यानालम्बनयोगस्य । एषा लोके लोकोत्तरे च प्रसिद्धा त्रैलोक्यसुन्दरता त्रैलोक्ये सर्व्वस्मिन्नपि जगति विशेषवस्तुभ्यः सुन्दरता शोभनता ॥ ७ ॥

उ० कुतः पुनः परतत्त्वमेवं प्रशस्यत इत्यत आह । तस्मिन्नित्यादि । एतस्मिन् परतत्त्वे सिद्धस्वरूपे दृष्टे दृष्टं सर्वमेव वस्तु भवतीतिशेषः । जीवाद्यमूर्त्तवस्त्वालम्बनस्य सर्वविषयत्वात्तद्भूतं तदेव सिद्धरूपं भूतं सत्यं संसारिजीवस्वरूपस्य ज्ञानावरणादिकर्मविकारोपद्रुतस्य सद्भूतत्ववियोगात् तत्तदेव परमात्मस्वरूपं परं प्रकृष्टं ब्रह्म मतं ततोऽन्यस्य बृहत्तमस्यायोगात् तद्योगात्परतत्त्वविषयकत्वसम्बन्धादस्याप्यनालम्बनयोगस्याप्येषा लोकलोकोत्तरप्रसिद्धा त्रैलोक्ये सर्वस्मिन्नपि जगति सुन्दरता शेषवस्तुनः शोभनता ॥ ७ ॥

कः पुनर्निरालम्बनयोगः कियन्तं कालं भवतीत्याह ॥

सामर्थ्ययोगतो या तत्र दिदृक्षेत्यसङ्गशक्त्याढ्या । सानालम्बनयोगः प्रोक्तस्तद्दर्शनं यावत् ॥ ८ ॥

य० सामर्थ्ययोगतः शास्त्रोक्तत्वात् क्षपकश्रेणीद्वितीयाऽपूर्व्वकरणभाविनः सकाशात् । सामर्थ्ययोगस्वरूपं चेदम् । "शास्त्रसन्दर्शितोपायस्तदतिक्रान्तगोचरः । शक्त्युद्रेकाद्विशेषेण सामर्थ्याख्योऽयमुत्तमः" । या तत्र परतत्त्वे द्रष्टुमिच्छा दिदृक्षा इत्येवंस्वरूपाऽसङ्गा चासौ शक्तिश्च निरभिष्वङ्गाऽनवरतप्रवृत्तिस्तयाढ्या परिपूर्णा दिदृक्षा । सा परमात्मविषयदर्-

पुरा विद्वद्भिः। स्यादेतत्परतत्त्वदिदृक्षाया अप्यपरतत्त्वदर्शनं यावदनालम्बनत्वापत्तिरपरतत्त्वस्य दृष्टत्वाभ्युपगमे च ध्यानानुपपत्तिरिति, मैवं। अपरतत्त्वे प्रतिमाद्यालम्बनद्वारा सामान्यतो दृष्टोऽपि विशेषदर्शनाय ध्यानोपपत्तेः परम्परयालम्बनवत्त्वेन च सालम्बनत्वव्यपदेशात्परतत्त्वे तु केनापि द्वारेण दर्शनाभावादनालम्बनत्वोपपत्तेः ॥ ९ ॥

किं पुनरनालम्बनाद्भवतीत्याह ॥

द्रागस्मात्तद्दर्शनमिषुपातज्ञातमात्रतो ज्ञेयम्। एतच्च केवलं तज् ज्ञानं यत्तत्परं ज्योतिः ॥ १० ॥

य० द्राक् शीघ्रमस्मात्प्रस्तुतादनालम्बनात्तद्दर्शनं परतत्त्वदर्शनमिषोः पातस्तद्विषयं ज्ञातमुदाहरणं तन्मात्रादिषुपातज्ञातमात्रतो ज्ञेयं दर्शनम्। एतच्च परतत्त्वदर्शनं केवलं सम्पूर्णं, तदिति तत्प्रसिद्धं ज्ञानं केवलज्ञानमित्यर्थः यत्तत्केवलज्ञानं परं प्रकृष्टं ज्योतिः प्रकाशरूपम्। इषुपातोदाहरणं च। यथा केनचिद्धनुर्द्धरेण लक्ष्याभिमुखे वाणे तदविसंवादिनि प्रकल्पिते यावत्तस्य वाणस्य न विमोचनं तावत्तत्प्रगुणतामात्रेण तदविसंवादित्वेन च समानोऽनालम्बनो योगो यदा तु तस्य वाणस्य विमोचनं लक्ष्याविसंवादिपतनमात्रादेव लक्ष्यवेधकं तदा आलम्बनोत्तरकालभावी तत्पातकल्पः सालम्बनः केवलज्ञानप्रकाश इत्यनयोः साधर्म्यमङ्गीकृत्य निदर्शनम् ॥ १० ॥

उ० किं पुनरनालम्बनाद्भवतीत्याह। द्रागित्यादि। द्राक् शीघ्रमस्मादनालम्बनयोगात्तद्दर्शनं परतत्त्वदर्शनमिषुपातस्य वाणपतनस्य ज्ञातमुदाहरणं तन्मात्रतो ज्ञेयम्। एतच्च परतत्त्वदर्शनं केवलं सम्पूर्णं तत्प्रसिद्धं ज्ञानं यत्केवलज्ञानं परं प्रकृष्टं ज्योतिः प्रकाशरूपम्। इषुपातोदाहरणं चैतद्। यथा केनचिद्धनुर्द्धरेण लक्ष्याभिमुख्येन तदऽविसंवादितया च वाणो व्या-

पारितो यावत्तस्य बाणस्य न विमोचनं तावत्तत्प्रगुणतामात्रेण तदविसंवादित्वेन च समोऽनालम्बनयोगः । यदा तु तस्य बाणस्य मोचनलक्ष्याऽविसंवादिपतनमात्रादेव सुतरां लक्ष्यवेध एवं यदानालम्बनध्यानमोचनं ध्यानान्तरिकायां तदैव परतत्त्ववेधकल्पः केवलप्रकाश इति ॥ १० ॥

कीदृशं पुनस्तत्केवलज्ञानमित्याह ॥

**आत्मस्थं त्रैलोक्यप्रकाशकं निष्क्रियं परानन्दम् । तीतादिपरिच्छेदकमलं ध्रुवं चेति समयज्ञाः ॥११॥**

य० आत्मनि तिष्ठतीत्यात्मस्थं जीवस्थं सत्त्रैलोक्यस्य त्रिलोकीव्यवस्थितस्य ज्ञेयस्य जीवाजीवरूपस्य प्रकाशकमवबोधकमात्मनः परेषां च पदार्थानां स्वरूपज्ञापकं वा । निष्क्रियं गमनादिक्रियारहितं पर आनन्दोऽस्मिन्निति परानन्दम् । पाठान्तरं वा परानन्द्यं परैरानन्द्यमभिनन्दनीयं तत्प्राप्त्यर्थिभिः श्लाघनीयं रोचनीयमितियावत् । तीतादिपरिच्छेदकम् अतीतशब्दस्यार्थे तीतशब्दो वर्त्तते, सिद्धिविनिश्चयादिग्रन्थेषु दर्शनात् इतादिपरिच्छेदकं वा । इतं गतमतिक्रान्तं अतीतवर्त्तमानानागतानां कालत्रयविषयाणां पदार्थानां परिच्छेदकं परिच्छेतृ ज्ञातृस्वभावमलं समर्थ, ध्रुवं चेति शाश्वतं चेति समयज्ञा आगमज्ञा, इत्थमभिदधति । कथं पुनरतीतादिपरिच्छेदकत्वं केवलज्ञानस्य यावतातीतानागतयोर्विचार्यमाणयोर्वस्तुत्वमेव न घटां प्राञ्चति विनष्टानुत्पन्नत्वेनासत्त्वादऽसतश्च ज्ञानविषयत्वविरोधादित्यत्रोच्यते । न वर्त्तमानकालविषयैकपर्यायप्रतिबद्धस्वभावं वस्तु तस्य क्षणमात्रवृत्तित्वाद्वस्तुनस्तु सकलातीतानागताऽनाद्यऽनन्तपर्यायराशिसमनुगतैकाकाररूपत्वात् तत्र च वर्त्तमानपर्यायवत्स्वलक्षणभाविनामतीतानागतपर्यायाणामपि प्रमाणेनोपलब्धेर्वस्तुसत्त्वादन्यथा स्मृत्या-

दिज्ञानविषयत्वमतीतादिपर्यायाणां न भवेत् दृश्यते च तस्मात्तेऽपि वस्तुसन्तस्तैर्विना वस्तुन एवाखण्डरूपस्यासम्भवात्तस्मात्तेषां सद्रूपत्वात्तद्विषयं ज्ञानं परिच्छेत्तृत्वेन सम्भवतीति निरवद्यम् ॥ ११ ॥

उ० कीदृशं पुनस्तत्केवलज्ञानमित्याह । आत्मस्थमित्यादि आत्मस्थं जीवस्थं सत्त्रैलोक्यस्य त्रिलोकीव्यवस्थितस्य ज्ञेयस्य प्रकाशकं निष्क्रियं गमनादिक्रियारहितं पर आनन्दोऽस्मादस्मिन्वेति परानन्दम् । परानन्द्यमिति पाठान्तरम् । तत्र परैरुत्कृष्टैरानन्द्यं प्रार्थनीयमित्यर्थः। अतीतार्थे तीतशब्दः सिद्धिविनिश्चयादिग्रन्थेषु दृश्यते ततः तीतादीनाम् अतीतवर्त्तमानानागतकालत्रयवर्त्तिपदार्थानां परिच्छेदकं यथावद्ज्ञातृस्वभावमलं समर्थं ध्रुवं शाश्वतं चेति समयज्ञा आगमज्ञा अभिदधति ॥ ११ ॥

एवं केवलज्ञानस्वरूपमभिधाय परतत्त्वयोजनायाह ॥

एतद्योगफलं तत्परापरं दृश्यते परमनेन । तत्तत्त्वं यद्दृष्ट्वा निवर्त्तते दर्शनाकाङ्क्षा ॥ १२ ॥

य० एतत्प्रस्तुतं केवलज्ञानं तद्योगफलं परापरं परयोगस्यापरयोगस्य च फलभूतं नान्यद्दृश्यते समुपलभ्यते साक्षात्परमनेन केवलज्ञानेन तत्तत्त्वं परमात्मस्वरूपं यद्दृष्ट्वा यत्सिद्धस्वरूपमुपलभ्य निवर्त्तते व्यावर्त्तते दर्शनाकाङ्क्षा दर्शनवाञ्छा सर्वस्य वस्तुनो दृष्टत्वात् ॥ १२ ॥

उ० एवं केवलज्ञानस्वरूपमभिधाय तत्र परतत्त्वयोजनामाह । एतदित्यादि । तदेतत्प्रस्तुतं केवलज्ञानं परापरयोगफलं

परयोगस्यापरयोगस्य च फलभूतं नान्यस्वतन्त्रव्यापारभूतमनेन केवलज्ञानेन तत् परं तत्त्वं परमात्मरूपं दृश्यते तत्किं यद्दृष्ट्वा दर्शनेच्छा निवर्त्तते सिद्धस्वरूपदर्शने सर्वस्य वस्तुनो दृष्टत्वात् ॥ १२ ॥

अधुना परतत्त्वमेव स्वरूपेण निरूपयन्निदमाह कारिकाचतुष्टयेन ॥

**तनुकरणादिविरहितं तच्चाचिन्त्यगुणसमुदयं सूक्ष्मम्। त्रैलोक्यमस्तकस्थं निवृत्तजन्मादिसङ्क्लेशम्॥१३॥**

य० तनुः शरीरं करणं द्विधान्तःकरणं वहिष्करणं चान्तःकरणं मनो वहिष्करणं पञ्चेन्द्रियाण्यादिशब्दाद् योगाऽध्यवसायस्थानपरिग्रहस्तैर्विरहितं वियुक्तं तच्च परं तत्त्वमचिन्त्यो गुणसमुदयो ज्ञानादिसमुदयो यस्य तदचिन्त्यगुणसमुदयं सूक्ष्मं सूक्ष्मस्वभावमदृश्यत्त्वात्केवलविरहेण त्रैलोक्यस्य मस्तकं सर्वोपरिवर्ती सिद्धिक्षेत्रविभागस्तस्मिंस्तिष्ठतीति त्रैलोक्यमस्तकस्थं निवृत्ता जन्मादयः सङ्क्लेशा यस्मात्तन्निवृत्तजन्मादिसङ्क्लेशम् ॥ १३ ॥

उ० परतत्त्वस्वरूपमेव कारिकाचतुष्टयेनाह। तनुकरणेत्यादि। तनुः शरीरं करणमन्तर्बहिर्भेदाद्द्विधा तत्रान्तःकरणं मनो वहिष्करणं च पञ्चेन्द्रियाण्यादिशब्दाद् योगाध्यवसायस्थानपरिग्रहः तैर्विरहितं वियुक्तं तच्च परतत्त्वमचिन्त्यगुणानां ज्ञानादीनां समुदयो यस्य तत्तथा सूक्ष्मं केवलविरहेणादृश्यत्त्वात् सूक्ष्मस्वभावं त्रैलोक्यमस्तकं सर्वोपरिवर्ती सिद्धिक्षेत्रविभागस्तस्मिंस्तिष्ठति यत्तत्तथा निवृत्ता जन्मादयः सङ्क्लेशा यस्मात्तत्तथा ॥ १३ ॥

**ज्योतिः परं परस्तात्तमसो यद्गीयते महामुनिभिः। आदित्यवर्णममलं ब्रह्माद्यैरक्षरं ब्रह्म ॥ १४ ॥**

य० ज्योतिः प्रकाशस्वभावं परं प्रधानं परस्तात्तमसो द्रव्यभावरूपादन्धकारात् यद्गीयते यत्संशब्द्यते महामुनिभिर्ज्ञा-

नसम्पन्नैः आदित्यवर्णममलं निदर्शनमात्राङ्गीकरणेन भास्वररूपं न पुनः परमार्थतस्तस्य पुद्गलात्मकःपरिणामोस्ति ब्रह्माद्यैरिति विशेष्यपदं महामुनिभिरित्यनेनाभिसंबध्यते न क्षरतीत्यक्षरं स्वभावात्कदाचिन्न प्रच्यवत इति कृत्वाऽक्षरं परं तत्त्वम् । तथा ब्रह्म महत् । "बृहत्त्वाद्बृंहकत्वाच्च ब्रह्मेति परिकीर्त्तित"मित्यभिधानादथवाऽक्षरं ब्रह्म तत् परं तत्त्वम् ॥ १४ ॥

उ० ज्योतिरित्यादि । परं प्रकृष्टं ज्योतिः तमसो भावद्रव्यरूपादन्धकारात्परस्तात्परभागवर्त्ति अत एवादित्यवर्णं सूर्यसदृशममलं रागादिमलरहितं न क्षरति न प्रच्यवते स्वभावात्कदाचिदित्यक्षरं ब्रह्म बृहत्त्वाद्बृंहकत्त्वाच्च यद् ब्रह्माद्यैर्महामुनिभिर्गीयते ॥ १४ ॥

नित्यं प्रकृतिवियुक्तं लोकालोकावलोकनाभोगम् । स्तिमिततरङ्गोदधिसममवर्णमस्पर्शमगुरुलघु ॥१५॥

य० नित्यं ध्रुवं, प्रकृतिवियुक्तं स्वतन्त्रपरिभाषया सकलज्ञानावरणीयादिमूलोत्तरभेदप्रकृतिवियुक्तं परतन्त्रपरिभाषया सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरित्यनया वियुक्तं सांसारिकसर्व्वप्रकारैर्व्वा लोकालोकयोः समयप्रसिद्धयोरवलोकन आभोग उपयोगोऽस्येति लोकालोकावलोकनाभोगं स्तिमिततरङ्गश्चासावुदधिश्च तेन समं निस्तरङ्गमहोदधिकल्पं न विद्यते वर्णः पञ्चविधः सितादिरस्येत्यवर्णं न विद्यते स्पर्शोऽष्टप्रकारो मृदुकर्कशादिरस्येत्यस्पर्शं न विद्येते गुरुलघुनी यस्मिंस्तत्तथाऽगुरुलघुपरिणामोपेतममूर्त्तद्रव्यत्त्वादगुरुलघु परं तत्त्वम् ॥ १५ ॥

उ० नित्यमित्यादि । नित्यं ध्रुवं प्रकृतिभिर्मूलोत्तरभेदभिन्नकर्मस्वभावरूपाभिर्वियुक्तं स्वतन्त्रपरिभाषया परतन्त्रपरिभा-

पया च सत्त्वरजस्तमसां साम्यावस्था प्रकृतिस्तया वियुक्तं लोकालोकयोरालोकने आभोगो विस्तारोऽनन्तकालोपयोगाविच्छेदरूपो यस्य तत्तथा स्तिमिततरङ्गो निश्चलोर्मिर्य उदधिस्तत्समं अवृ(नुद्घृ)त्तिपूर्णकलशस्वभावत्त्वादवर्णं वर्णरहितमस्पर्शं स्पर्शरहितमगुरुलघु अमूर्त्तद्रव्यत्त्वादगुरुलघुपरिणामोपेतम् ॥ १५ ॥

सर्वाबाधारहितं परमानन्दसुखसङ्गतमसङ्गम् । निःशेषकलातीतं सदाशिवाद्यादिपदवाच्यम् ॥१६॥१५॥

य० सर्व्वाबाधारहितं शारीरमानसाबाधावियुक्तम् । परम आनन्दो यस्मिन् सुखे तेन सङ्गतं युक्तमनेन परपरिकल्पितनिःसुखदुःखमोक्षव्यवच्छेदमाह। न विद्यते सङ्गो यस्मिन्नित्यसङ्गमसङ्गतायुक्तं तल्लक्षणं चेदम् । "भये च हर्षे च मतेरविक्रिया सुखेऽपि दुःखेऽपि च निर्विकारता। स्तुतौ च निन्दासु च तुल्यशीलता वदन्ति तां तत्त्वविदो ह्यसङ्गताम् ॥१॥" निःशेषा याः कलास्ताभ्योऽतीतं तथाभव्यत्त्वाद्यात्मस्वभावभूतांशातिक्रान्तं भव्यत्त्वासिद्धत्त्वयोगसहवर्त्तिक्षायिकचारित्राद्यभावात् । सदा शिवमस्येति सदाशिवं न हि परतत्त्वमशिवं कदाचिद्भवति । आदौ भवमाद्यं प्रधानं सन्तत्या अनादिकालसाश्रित्यादिभावेनावस्थितं वा आदिशब्दान्निरञ्जनादिग्रहः सदाशिवाद्यादिभिः पदैर्व्वाच्यमभिधेयं परं तत्त्वं सर्वत्राभिसम्बन्धनीयम् ॥ १६ ॥ १५ ॥

उ० सर्वेत्यादि । सर्वाभिराबाधाभिः पीडाभी रहितं परमानन्दसुखेन सर्वसांसारिकसुखातिशायिसुखेनेत्यर्थः सङ्गतं युक्तं सङ्गरहितं निःशेषाः याः कलास्तथाभव्यत्त्वसिद्धत्त्वयोगसहवर्त्तिक्षायिकचारित्राद्यात्मस्वभावभूतांशलक्षणास्ताभ्योऽ-

तीतं सिद्धिसमये तन्निवृत्त्यभिधानात् सदा शिवमत्रेति सदाशिनमादौ भवमाद्यं प्रधानप्रवाहापेक्षयादि. । 'नावस्थितं वा एतदादिपदवाच्यम् । आदिना निरञ्जनादिग्रहः परतत्त्वमिति सर्वत्र सम्बन्धनीयम् ॥ १६ ॥ १५ ॥

॥ इति पञ्चदशं षोडशकम् ॥

---

एवं परतत्त्वमभिधाय तद्दर्शनानन्तरं यद्भवति तदाह ॥

**एतद्दृष्ट्वा तत्त्वं परममनेनैव समरसापत्तिः । सञ्जायतेऽस्य परमा परमानन्द इति यामाहुः ॥ १ ॥**

य० एतत्प्रस्तुतं दृष्ट्वाऽवलोक्य तत्त्वं परमं परतत्त्वमित्यर्थः अनेनैवमुक्तस्वरूपेण समरसापत्ति. समतापत्तिः सञ्जायते सम्भवत्यस्य द्रष्टुः केवलिनः परमा प्रधाना परमानन्द इति यामाहुः यां समरसापत्तिं परमानन्द इत्यनेन शब्देन ब्रुवते वेदान्तवादिनः सा सञ्जायत इति ॥ १ ॥

उ० एवं परतत्त्वमभिधाय तद्दर्शनानन्तरं यद्भवति तदाह । एतदित्यादि । एतत्प्रस्तुतं परमतत्त्वं दृष्ट्वाऽनेनैव परतत्त्वेन समरसापत्तिरेकता सञ्जायतेऽस्य द्रष्टुः केवलिनः परमा प्रधाना परमानन्द इति यां समरसापत्तिमाहुर्वेदान्तवादिनः ॥ १ ॥

परतत्त्वस्यैव शब्दान्तराभिधेयतामाह ॥

सैषाऽविद्यारहितावस्थापरमात्मशब्दवाच्येति । एषैव च विज्ञेया रागादिविवर्जिता तथता ॥ २ ॥

ग० सैषाऽविद्यारहिताऽवस्थाऽविद्यया परतन्त्रप्रसिद्धया रहिता विकलाऽवस्थाऽवस्थितिर्वर्तमाना या सा । एषा पर-
तत्त्वरूपा परमात्मशब्देन वाच्याऽभिधेया इतिशब्दः स्वरूपं दर्शयति । एषैव चावस्था विज्ञेया विज्ञातव्या रागादिवि-
वर्जिता रागादिरहिता तथ्यं सत्यं रूपमात्मनस्तद्भावस्तत्ता ॥ २ ॥

उ० परतत्त्वस्यैव शब्दान्तराभिधेयतामाह । सेत्यादि । अविद्यया परतन्त्रप्रसिद्धाज्ञानरूपया रहिताऽवस्था सा एषा
या परतत्त्वरूपा परमात्मशब्देन वाच्येतिशब्दः स्वरूपदर्शने एषैव चावस्था विज्ञेया रागादिभिर्विवर्जिता तथ्यं सत्यं रूप-
मात्मनस्तत्ता ॥ २ ॥

अस्यामेवावस्थायामन्यदपि तन्त्रान्तरोक्तं संवादयन्नाह ॥

वैशेषिकगुणरहितः पुरुषोऽस्यामेव भवति तत्त्वेन । विध्यातदीपकल्पस्य हन्त जात्यन्तराप्राप्तेः ॥ ३ ॥

य० विशेषे भवा वैशेषिकास्ते च ते गुणाश्च बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः वैशेषिकगुणास्तै रहितो विप्रमुक्तः पुरुषोऽ-
स्यामेवावस्थायां भवति जायते । तत्त्वेन परमार्थेन । अस्यामेवेत्यवधारणफलमाह । विध्यातदीपेन कल्पस्तुल्यस्तुच्छरूप-
स्तन्त्रान्तरप्रसिद्ध्या तस्य । हन्त इत्यवधारणे जात्यन्तरस्य दोषवतः सतोऽदोषवत्त्वस्याप्राप्तेरलाभात् । नहि तुच्छरूपता-
मापन्नोऽविद्यारहितावस्थां वस्तुसती भजत इति जात्यन्तराप्राप्तिः ॥ ३ ॥

उ० अस्यामेवावस्थायां तन्त्रान्तरोक्तमन्यदपि संवादयन्नाह । वैशेपिकेत्यादि । विशेपे भवा वैशेपिकास्ते च ते गुणाश्च बुद्धिसुखदुःखेच्छाद्वेपप्रयत्नास्तै रहितः पुरुपोऽस्यामेवावस्थायां भवति तत्त्वेन परमार्थेन तेनाखण्डशुद्धज्ञानसुखाद्यन्वय्यात्मद्रव्यरूपाप्यशुद्धज्ञानाद्यभावरूपा मुक्तिः सिद्धा न तु सर्वथाऽभावरूपा बौद्धाभिमता विध्यातदीपेन कल्पस्य सर्वथातुच्छरूपस्यात्मनो हन्तेति प्रत्यवधारणे जात्यन्तरस्य दोपवतः सतोऽदोपवत्त्वस्याप्राप्तेः । नहि खरविपाणादिवत्तुच्छरूपतामापन्नोऽविद्यारहितावस्थां वस्तुसत्तां भजत इति जात्यन्तराप्राप्तिः । नच स्वाभावार्थं कस्यचित्प्रवृत्तिः सम्भवतीति पुरुपार्थत्वादन्वय्यात्मद्रव्यस्योक्तावस्थैव मुक्तिर्घटते । एतेन सर्वथा सन्तानोच्छेद इत्येकेपां बौद्धानां शुद्धक्षणोत्पाद इत्यन्येपां च मतं निरस्तं भवति । अनन्वितशुद्धक्षणानां मुक्तित्वेऽन्यान्यमुक्तिसाङ्कर्यप्रसङ्गात् । वैशेपिकगुणरहित इति भ्रागृभङ्ग्या कथंचिन्निर्गुणमुक्तिपक्ष आदृतः सर्वथा निर्गुणमुक्तिपक्षस्तु वेदान्त्यादीनामपास्तः ॥ ३ ॥

एवं बौद्धमतनिरासं प्रतिपाद्य वस्तुसत्यामवस्थायां तन्त्रान्तरोक्तं संभवित्वेन निदर्शयन्नाह ॥

**एवं पशुत्वविगमो दुःखान्तो भूतविगम इत्यादि । अन्यदपि तन्त्रसिद्धं सर्वमवस्थान्तरेऽत्रैव ॥ ४ ॥**

प्र० एवमुक्तनीत्या पशुत्त्वमज्ञत्त्वं तस्य विगमोऽपगमः सर्व्वथा निवृत्तिः दुःखानामन्तो दुःखान्तो भूतानां पृथिव्यादीनां विगम आत्यन्तिको वियोग इत्यादि । एवं प्रभृति अन्यदपि तन्त्रसिद्धं पूर्वोक्तं सर्वं निरवशेपमवस्थान्तरेऽविद्यारहितावस्थाविशेपेऽत्रैव परतत्त्वरूपे युज्यते । नान्यत्रेति ॥ ४ ॥

उ० अस्यां वस्तुसत्यामवस्थायां तन्त्रातरोक्तं सम्भवित्त्वेन दर्शयन्नाह । एवमित्यादि। एवमुक्तनीत्या पशुत्त्वमज्ञत्त्वं तस्य विगमोऽपुनर्भावेन नाशः दुःखानामन्तो भूतानां पृथिव्यादीनां विगम आत्यन्तिको वियोग इत्यादि । अन्यदपि उक्तावशिष्टमपि तन्त्रसिद्धं तत्तत्समयप्रसिद्धं सर्वं निरवशेपमवस्थान्तरे दोपरहितशुद्धगुणावस्थारूपेऽत्रैव परतत्त्वस्वरूपे युज्यते नान्यत्र ॥ ४ ॥

एतच्च सर्व्वमपि तन्त्रान्तरसिद्धं यथाविधे वस्तुतत्त्वे सति युज्यते तथाविधमुपदर्शयितुमाह ॥

परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिलं स्यात्। अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव ॥ ५ ॥

य० अन्यथा चान्यथा च भवतोप्यन्वयित्त्वं परिणामः स विद्यते यस्य स परिणामी तस्मिन्परिणामिन्यात्मनि जीवे सति विद्यमाने मुक्तिवादिनामात्मसत्ताया न विप्रतिपत्तिरस्ति । चैतन्यस्वरूपस्य परलोकान्वयिनः पुरुपस्य सर्वैरप्यभिमतत्त्वान्नित्यत्त्वक्षणिकत्त्वादिविपयैव विप्रतिपत्तिरिति तन्निरासद्वारेण परिणामिनीत्युक्तं तैस्तैर्ध्वनिभिः शब्दैः पूर्वोक्तैर्वाच्यमभिधेयमेतत्प्रागुक्तमविद्यारहितावस्थावैशेपिकगुणरहितपुरुषपशुत्त्वविगमादि । सर्वैर्वा ध्वनिभिर्यद्वाच्यं सम्यग्दर्शनज्ञानसदनुष्ठानादिप्रकरणोक्तमखिलं स्याद्भवेत्सम्भवेत् अर्थान्तरे च वस्त्वन्तरे च भिन्ने तत्त्वे पदार्थे अविद्यादावविद्यादृष्टसंस्कारादौ । वस्तुसत्येव परमार्थसत्येव न संवृत्तिसति तस्य परमार्थतः कल्पितरूपत्त्वेनासत्त्वात् ॥ ५ ॥

उ० एतच्च सर्वमपि तन्त्रान्तरसिद्धं यथाविधवस्तुतत्त्वाभ्युपगमे युज्यते तादृशं वस्तु परीक्षयन्नाह । परिणामिनीत्यादि । केनचिद्रूपेणान्वयित्त्वे सति केनचिद्रूपेण व्यतिरेकित्त्वं परिणामः स विद्यते यस्य परिणामी तस्मिन्नात्मनि जीवे

सत्यभ्युपगम्यमाने सति मुक्तिनादिनामात्मसत्तायामविप्रतिपत्तेस्तस्मिन्नित्यत्वक्षणिकत्त्वादावेन विप्रतिपत्तेस्तन्निरासायेदं विशेषणं तैस्तैर्ध्वनिभिः शब्दैर्वाच्यमभिधेयमेतत्प्रागुक्तमविद्यारहिताऽवस्थावैशेषिकगुणरहितपुरुषपशुत्त्वविगमादि । अथवा तैस्तैर्ध्वनिभिर्वाच्यं सम्यग्दर्शनज्ञानसदनुष्ठानादिप्रकरणोक्तमेतदखिलं स्यात् सम्भवेत् । अर्थान्तरे चात्मभिन्ने च तत्त्वे पदार्थेऽविद्यादावविद्यादृष्टसंस्कारादिपदवाच्ये वस्तुसत्येव परमार्थतो विद्यमान एव नतु सांवृतसत्त्वेनाभ्युपगम्यमाने तस्य कल्पितरूपत्त्वेन तत्त्वतोऽसत्त्वात् ॥ ५ ॥

किमात्मनि परिणामिन्यविद्यादौ च वस्तुसति सर्वमिदं स्यादाहोस्विदन्यदपि हेत्वन्तरं मुक्तामुक्तावस्थयोर्भेदकं कारणभूतमस्तीत्याशङ्कायामिदमाह ॥

तद्योगयोग्यतायां चित्रायां चैव नान्यथा नियमात् । परिभावनीयमेतद्विद्वद्भिस्तत्त्वदृष्ट्योच्चैः ॥ ६ ॥

य० तेनार्थान्तरभूतेन तत्त्वेनाविद्यादिना योगः सम्बन्धः आत्मनः कर्म्मबन्ध इत्यर्थस्तस्मिः योग्यता जीवस्य कर्म्मपुद्गलग्राहकस्वभावत्त्वमनादिपारिणामिकभव्यभावलक्षणम् सहजमलरूपं मुक्तावस्थायां निवर्त्ति योग्यताशब्देनोच्यते तस्यां तद्योगयोग्यतायां सत्यां चित्रायां चैव नानाप्रकारायां चैव सकलजीवापेक्षया कालादिभेदेनात्मनां वीजसिद्धिभावात् । नान्यथा, एकस्वभावायां योग्यतायां फलभेदासिद्धेः । दृश्यते च द्रव्यक्षेत्रकालभावप्रक्रमेण तीर्थकरातीर्थकरप्रत्येकबुद्धस्वयंबुद्धादिरूपः फलभेदस्तस्माच्चित्ररूपायामेव योग्यतायां स युज्यते। नियमान्नियमेन परिभावनीयं सर्व्वप्रकारैश्चिन्तनी-

यमेतत्रयं जीवकर्म्म(तथा)भव्यत्वरूपं विद्वद्भिः सूरिभिस्तत्त्वदृष्ट्या परमार्थविषयया बुद्ध्यागमापनीतविपर्ययमलया प्रज्ञयोच्चैरत्यर्थम् ॥ ६ ॥

उ० तथा । तद्योगेत्यादि । तेनार्थान्तरभूतेन तत्त्वेनाविद्यादिना योगः सम्बन्ध आत्मनः कर्मबन्ध इत्यर्थः तस्मिन् योग्यता जीवस्य कर्मपुद्गलग्राहकस्वभावत्वमनादिपारिणामिकभव्यभावलक्षणं सहजमलरूपं मुक्तिसमये विनिवृत्तिमत्तस्यां चित्रायां चैव नानाप्रकारायामेव सत्यां नान्यथा एकस्वभावायां योग्यतायां फलभेदासिद्धेः । दृश्यते च द्रव्यक्षेत्रकालभावप्रक्रमेण तीर्थकरातीर्थकरप्रत्येकबुद्धस्वयंबुद्धादिरूपः फलभेदस्तस्मात्तन्नियामकं योग्यतावैचित्र्यमवश्यमाश्रयणीयमिति। नियमान्नियमेन परिभावनीयं सर्वप्रकारैश्चिन्तनीयमेतत्रयं जीवकर्म(तथा)भव्यत्वरूपं विद्वद्भिः सूरिभिस्तत्त्वदृष्ट्यागमापनीतविपर्ययमलया प्रज्ञयोच्चैरत्यर्थम्। ननु तीर्थकरसिद्धत्वादिकं नीलघटत्वादिवदर्थसमाजसिद्धमिति तत्प्रयोजकतया योग्यताभेदो न सिद्ध्येदिति चेन्न । कार्ये तावद्धर्मकत्वस्य योग्यताविशेषप्रयोज्यत्वात्, तत्र तथाविधसामग्रीसमाजस्य प्रयोजकत्वे तत्रापि तथाविधप्रयोजकान्तराश्रयणेऽनवस्थानात्, यदि चेयमनवस्था प्रामाणिकानां न दोषाय तदायं नियतधर्म्मककार्यनियामकस्तथाविधसामग्रीसमाज एव कथंचिदेकत्वेन भासमानः परिणामिभव्यत्वरूपः स्वीक्रियतामित्थमपि स्याद्वादप्रक्रियया दोषाभावादित्यधिकमस्मत्कृतस्याद्वादकल्पलतायाम् ॥ ६ ॥

एतत्रयानाश्रयणे संसारमोक्षयोरनुपचरितरूपयोरभावप्रदर्शनायाह ॥

**पुरुषाद्वैतं तु यदा भवति विशिष्टमथ च बोधमात्रं वा। भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः॥७॥**

य० द्वयोर्भावो द्विता तस्यां भवं सैव वा द्वैतं न द्वैतमद्वैतं पुरुषस्याद्वैतमेकत्वं तु यदा भवत्यङ्गीकरणेन वादिनो विशिष्टं केवलं रागादिवासनारहितमवबोधमात्रंवा बोधस्वलक्षणं वा । वेदान्तवादिनः पुरुषाद्वैतं मन्यन्ते यथाहुरेके"पुरुष एवेदं सर्व्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । यदेजति यन्नैजति यद्दूरे यदन्तिके यदन्तरस्य सर्व्वस्य यदु सर्व्वस्यास्य बाह्यतः"तथा "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिन" इति श्रुतिस्मृतिप्रसिद्धेर्विज्ञानवादिनस्तु शेषनीलादिविकल्पशून्यं पारमार्थिकरागादिवासनादिविशेषरहितं च बोधस्वलक्षणमात्रमेव प्रतिजानते । यथोक्तं "चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवांत इति कथ्यते"भवश्च भवविगमश्च तौ संसारमोक्षौ तयोर्विभेदो भवभवविगमविभेदस्तदा कथं युज्यते मुख्यः संसारमोक्षयोर्मुख्यो भेदो न युज्यते । अर्थान्तरे ह्यविद्यादौ तत्त्वे भेदके सति तयोर्विशेषो युज्यत इतिभावः ॥ ७ ॥

उ० एतन्नयानाश्रयणे संसारमोक्षयोरनुपचरितयोरभावमापादयन्नाह । पुरुषेत्यादि । द्वयोर्भावो द्विता तस्यां भवं सैव वा द्वैतम् । न द्वैतमद्वैतं पुरुषस्याद्वैतं पुरुषाद्वैतम् । तत्तु यदा भवति परतत्त्वमभ्युपगतं वेदान्तवादिभिः अथवा विशिष्टं रागादिवासनारहितं बोधमात्रं बोधस्वलक्षणं परतत्त्वमभ्युपगतं भवति बौद्धैः तदा भवभवविगमयोः संसारमोक्षयोर्विभेदो मुख्यो निरुपचरितः कथं युज्यते अर्थान्तरे ह्यविद्यावासनादौ तत्त्वे भेदके सति तद्भेदः स्यात्तदसत्त्वे तु न कथञ्चिदित्यर्थः ॥ ७ ॥

कस्मात्पुनः पुरुषाद्वैतं बोधमात्रं वा विशिष्टं न भवतीत्याह ॥

अग्निजलभूमयो यत्परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ८ ॥

य० अग्निश्च जलं च भूमिश्चाग्निजलभूमयो यद्यस्मात्परितापकराः परमार्थतो दुःखानुभवकरा वैषयिकसुखस्य भावतो दुःखरूपत्त्वात् । भवे संसारे अनुभवसिद्धाः प्रत्यक्षसिद्धाः । किं पुनर्वहिस्त्रयाणामर्थानामुपादानं वायोरपि पठितत्त्वाल्लोकसिद्धत्त्वाच्च, उच्यते । वायुपदार्थे द्रव्यगुणरूपतायां विप्रतिपद्यन्ते वादिनो नाग्निजलभूमिषु तेषां द्रव्यरूपेण प्रतीतेरतो न वायुग्रहणं सर्व्वेन्द्रियानुपलम्भाद्वा । यद्वाग्निसहचरितत्त्वेनैव वायोर्ग्रहणं "यत्र तेजस्तत्र वायु"रिति वचनात्, रागादयश्च रागद्वेषमोहाश्च रौद्रा दारुणास्तीव्रसङ्क्लेशरूपेणासत्प्रवृत्त्यास्पदमसत्प्रवृत्तीनामसुन्दरप्रवृत्तीनामास्पदं प्रतिष्ठा लोके सर्व्वत्रैवानुभवसिद्धा यतो वर्त्तते । यदि पुरुषाद्वैतमेव भवेत् । प्रत्यक्षसिद्धा वाह्या ज्वलनादयः पदार्था न स्युस्तेषां चैतन्यस्वरूपपुरुषव्यतिरेकेण रूपान्तरोपलब्धेस्तेषां तु वहिर्वर्त्तिनां ज्वलनादीनां पुरुषत्त्वाङ्गीकरणे सर्व्वपदार्थानां नाममात्रमेव कृतं स्यात्पुरुष इति न तत्र विप्रतिपत्तिः । विज्ञानाद्वैतमपि यदि भवेन्न रागादयोऽनुभवसिद्धाः प्रति प्राणिनो भवेयुस्तथा च सकललोकपरीक्षकविरोधस्तेषां सर्वैरभ्युपगमादनुभवस्य चान्यथा कर्तुमशक्यत्त्वादिति ॥ ८ ॥

उ० पुरुषाद्वैते विशिष्टवोधमात्रे वा तत्त्वे प्रत्यक्षवाधापीत्याह । अग्नीत्यादि । अग्निजलभूमयो वैषयिकसुखस्यापि दुःखरूपत्त्वात्परितापकरास्तत्त्वतो दुःखदा भवे संसारे यद् यस्मादनुभवसिद्धाः प्रत्यक्षप्रतीताः रागादयो रागद्वेषमोहाश्च रौद्रा दारुणा असत्प्रवृत्तीनामसुन्दरचेष्टानामास्पदं मूलप्रतिष्ठा लोके सर्वत्रैवानुभवसिद्धास्ततः पुरुषाद्वैते ज्ञानाद्वैते वा प्रत्यक्षवाध इत्यर्थः । अयं चायुक्त इति । वाह्यार्थानां पुरुष इति ज्ञानमिति च नामान्तरमेव कृतं स्याद्, वादिभिरितिभावः ॥ ८ ॥

अथ सर्व्वेऽप्येते बाह्या आन्तराश्च परिकल्पितरूपा एवेत्याशङ्कायामिदमाह ॥

**परिकल्पिता यदि ततो न सन्ति तत्त्वेन कथममी स्युरिति। तन्मात्र एव तत्त्वे भवभवविगमौ कथं युक्तौ ९**

य० परिकल्पिता अवस्तुसन्तः कल्पनामात्रनिर्म्मितशरीरा बाह्या आन्तराश्च यदि भवताऽभ्युपगम्यन्ते । ततः परिकल्पितत्त्वादेव न सन्ति न विद्यन्ते तत्त्वेन परमार्थेन कथममी पदार्थाः स्युर्भवेयुर्न्न कथंचिद्भवेयुर्भवताप्यनभ्युपगमात् । इत्येवं तन्मात्र एव पुरुषमात्र एव बोधमात्र एव च तत्त्वे परमार्थे भवभवविगमौ संसारमोक्षौ कथं केन प्रकारेण युक्तौ सङ्गतौ न कथञ्चिदित्यर्थः ॥ ९ ॥

उ० अथ सर्वेऽप्येते बाह्या आन्तराश्च भावाः परिकल्पितरूपा एवेत्याशङ्कायामिदमाह । परीत्यादि । परिकल्पिता अवस्तुसन्तः कल्पनामात्रनिर्म्मितशरीरा बाह्या आन्तराश्च यदि भवताभ्युपगम्यन्ते ततः परिकल्पितत्त्वादेव न सन्ति न विद्यन्ते तत्त्वेन परमार्थेन। तथा च कथममी पदार्थाः स्युर्भवेयुर्न कथंचिद्भवताप्यनभ्युपगमात्। इत्येवं तन्मात्र एव पुरुषमात्र एव तत्त्वे परमार्थेऽभ्युपगम्यमाने भवभवविगमौ संसारमोक्षौ कथं केन प्रकारेण युक्तौ न कथञ्चिदित्यर्थः ॥ ९ ॥

कस्मात्पुनः परिकल्पिता एते न सन्तीत्युच्यते परिकल्पनाया एवाभावादित्याह ॥

**परिकल्पनापि चैषा हन्त विकल्पात्मिका न सम्भवति। तन्मात्र एव तत्त्वे यदि वाऽभावो न जात्वस्याः॥१०**

य० परिकल्पनापि च एषा बाह्यान्तराणामर्थानां हन्त विकल्पात्मिका वस्तुशून्यनिश्चयात्मिका न संभवति न युज्यते

१ क्वचित्पुस्तके परिकल्पितेति पाठो दृश्यते

निर्व्वीजत्त्वात् । युक्तिमाह । तन्मात्र एव पुरुषमात्र एव ज्ञानमात्र एव च तत्त्वे । तदतिरेकेणेतरपदार्थाभावात् । अभ्युपगम्य परिकल्पनां दूषणान्तरमाह । यदि वा अभावोऽसम्भवो न नैव जातु कदाचिदप्यस्याः परिकल्पनायाः। यदि निर्व्वीजापीयं वाह्यान्तरपदार्थपरिकल्पनेष्यते ततः संसारवन्मुक्तावपि भवेदियमितिभावस्ततश्च संसारमोक्षभेदानुपपत्तिः परिकल्पनावीजसद्भावाभ्युपगमे तु पुरुषबोधस्वलक्षणव्यतिरिक्तवस्त्वन्तरापत्त्या प्रस्तुताद्वैतपक्षद्वयहानिः ॥ १० ॥

उ० परिकल्पनाया असंभवादपि परिकल्पिताऽसम्भव इत्याह । परीत्यादि । परिकल्पिता परिकल्पनेत्यर्थः सापि चैषा वाह्यान्तराणामर्थानां हन्त विकल्पात्मिका वस्तुशून्यनिश्चयात्मिका न सम्भवति न युज्यते तन्मात्र एव पुरुषमात्र एव ज्ञानमात्र एव च तत्त्वेऽभ्युपगम्यमाने तदतिरेकेणेतरपरिकल्पनावीजपदार्थाभावादित्यर्थः। अभ्युपगम्य परिकल्पितां दूषणान्तरमाह । यदिवाऽभावोऽसम्भवो न नैव जातु कदाचिदप्यस्याः परिकल्पनायाः स्यात् यदि निर्व्वीजापीयं वाह्यान्तरपदार्थपरिकल्पनेष्यते तदा संसारदशायामिव मुक्तावपीयं भवेदितिभावस्ततश्च संसारमोक्षभेदानुपपत्तिः परिकल्पनावीजसद्भावाभ्युपगमे तु पुरुषबोधस्वलक्षणव्यतिरिक्तवस्त्वन्तरसिद्ध्या प्रस्तुताऽद्वैतपक्षद्वयहानिः ॥ १० ॥

एवं परपक्षं निरस्य त्रयसमर्थनायाह ॥

**तस्माद्यथोक्तमेतत्त्रितयं नियमेन धीधनैः पुम्भिः। भवभवविगमनिबन्धनमालोच्यं शान्तचेतोभिः ॥११॥**

य० तस्माद्यथोक्तमेतत्त्रितयं जीवकर्म्मतथाभव्यस्वरूपं नियमेन नियोगेन धीधनैः वुद्धिधनैः पुम्भिः पुरुषैर्भवभवविगमनिवन्धनं संसारमोक्षकारणमालोच्यमालोचनीयं शान्तचेतोभिः शान्तचित्तैः ॥ ११ ॥

उ० एवं परपक्षं निरस्य स्वोक्तत्रयसमर्थनायाह। तस्मादित्यादि । तस्माद्यथोक्तमेतत्रितयं जीवकर्मतथाभव्यत्त्वरूपं नियमेन नियोगेन धीधनैर्बुद्धिधनैः पुम्भिः पुरुपैः भवभवविगमनिबन्धनं संसारमोक्षकारणमालोच्यं सम्यग्भावनीयं शान्तचेतोभिररक्तद्विष्टचित्तैः ॥ ११ ॥

ननु चागमप्रामाण्यमवलम्बमानैः पुरुपाद्वैतं ज्ञानाद्वैतं च यदेष्यते तदा को दोप इत्याह ॥

**ऐदम्पर्यं शुद्ध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथाग्रहणात् ॥ १२ ॥**

य० ऐदम्पर्यं तात्पर्यं पूर्वोक्तं शुद्ध्यति स्फुटीभवति यत्रागमे असावागमः सुपरिशुद्धः प्रमाणभूतस्तदभावे ऐदम्पर्यशुद्ध्यभावे तद्देशः परिशुद्धागमैकदेशः कश्चिदन्य आगमः स्यान्नतु मूलागम एव अन्यथाग्रहणान्मूलागमैकदेशस्य सतो विषयस्यान्यथाप्रतिपत्तेर्यतः समतामवलम्बमानास्तेऽपि तथेच्छन्ति ॥ १२ ॥

उ० ननु चागमप्रामाण्यमवलम्बमानैः पुरुपाद्वैतं ज्ञानाद्वैतं वा यदेष्यते तदा को दोप आगमानुसारेणैव युक्तिप्रवर्त्तनस्य न्याय्यत्वादत आह । ऐदम्पर्यमित्यादि । ऐदम्पर्य्यं प्रकृतार्थोपपत्तितात्पर्य्यं यत्रागमे शुद्ध्यति निर्वहति असावागमः सुपरिशुद्धः प्रमाणभूतस्तात्पर्य्यार्थपर्यन्तं प्रमाणशब्दव्यापारात्तदभावे ऐदम्पर्यशुद्ध्यभावे तद्देशः परिशुद्धागमैकदेशार्थगर्भः कश्चिदन्य आगमः स्यान्नतु मूलागम एव अन्यथाग्रहणान्मूलागमैकवाक्यस्य कस्यचिद्वचनस्य तदेकवाक्यतानापन्नवाक्यान्तरमिश्रितत्त्वेन वैपरीत्त्येन ग्रहणादत एवैदम्पर्य्यार्थान्वेपिणः समतामवलम्बमाना अन्यतीर्थिका अपि तदर्थविरुद्धवाक्यार्थाननुप्रवेशेन यावदुपपन्नमिच्छन्ति नतु मिथ्यैकान्तेन ॥ १२ ॥

मूलागमव्यतिरिक्ते तदेकदेशभूत आगमेऽन्यथापरिगृहीते द्वेषो विधेयो नवेति तदभावप्रतिपादनायाह ॥

**तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः। तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत् ॥१३॥**

य० तत्रापि च तदेकदेशभूत आगमान्तरे न द्वेषः कार्यो न द्वेषो विधेयो विषयस्त्वभिधेयज्ञेयरूपो यत्नतो यत्नेन मृग्योऽन्वेषणीयो यद्येवं सर्व्वमेव तद्वचनं किं न प्रमाणीक्रियत इत्याह। तस्याप्यागमान्तरस्य न सत् शोभनं वचनं सर्व्वमखिलं यत्प्रवचनान्मूलागमादन्यत्। यत्तु तदनुपाति तत्सदेवेति ॥ १३ ॥

उ० नन्वेवमन्यथाप्रतिपन्नमूलागमैकदेशगर्भपरतन्त्रे द्वेषः कार्यो नवेत्याशङ्कायामाह। तत्रापीत्यादि। तत्रापि तदेकदेशभूतागमान्तरेऽपि न द्वेषः कार्यः तु पुनर्विषयो यत्नतो मृग्यस्तदर्थानुपपत्तिपरिहारो यत्नतः कर्त्तव्यः गुणग्रहरसिकानां परवचनानुपपत्तिपरिहारप्रवणस्वभावत्वात्। ननु वस्तुत उपपन्नार्थवचनस्यानुपपत्तिशङ्का परिहार्या नतु सर्वथानुपपन्नस्येति निर्विषयोऽयमुपदेश इत्यत आह। तस्याप्यागमान्तरस्य सद्वचनं शोभनं वचनं सर्वं यद् यस्मात्प्रवचनान्मूलागमादन्यन्न किन्तु तदनुपात्येव तथा च तस्य मूलागमेनैकवाक्यतामापाद्योपपत्तिरेव कर्त्तव्येत्थमेव सम्यग्दृष्टिपरिगृहीतस्य मिथ्याश्रुतस्यापि सम्यक्श्रुतत्त्वसिद्धेस्तदरुचिस्तु तत्त्वतो दृष्टिवादारुचिपर्य्यवसायिनीति सुप्रसिद्धमुपदेशपदादौ ॥ १३ ॥

कस्मात्पुनस्तत्राद्वेषः क्रियत इत्याह ॥

**अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः। परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥**

य० अद्वेषोऽप्रीतिपरिहारस्तत्त्वविषयस्तत्पूर्विका ज्ञातुमिच्छा जिज्ञासा तत्त्वविषया ज्ञानेच्छा तत्त्वजिज्ञासा सा पूर्व्विका

बोधाम्भःश्रोतसः सिराकल्पा श्रोतुमिच्छा शुश्रूषा तत्त्वविषयैव । तत्त्वशुश्रूषानिबन्धनं श्रवणमाकर्णनं तत्त्वविषयमेव । बोधोऽवगमः परिच्छेदो विवक्षितार्थस्य श्रवणनिबन्धनस्तत्त्वविषय एव मीमांसा सद्विचाररूपा बोधानन्तरभाविनी तत्त्वविषयैव । श्रवणं च बोधश्च मीमांसा च श्रवणबोधमीमांसाः । परिशुद्धा सर्वतो भावविशुद्धा प्रतिपत्तिर्मीमांसोत्तरकालभाविनी निश्चयाकारा परिच्छित्तिरिदमित्थमेवेति तत्त्वविषयैव । प्रवर्त्तनं प्रवृत्तिरनुष्ठानरूपा परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषयैव, प्रवृत्तिशब्दो द्विरावर्त्यते तेनायमर्थो भवति । तत्त्वे प्रवृत्तिरष्टभिरङ्गैर्निर्वृत्ता अष्टाङ्गिकी एभिरद्वेषादिभिरष्टभिरङ्गैस्तत्त्वप्रवृत्तिः संपद्यते तेनागमान्तरे मूलागमैकदेशभूते न द्वेषः कार्य इति ॥ १४ ॥

उ० उक्ताद्वेषस्यैव तत्त्वज्ञानानुकूलतामभिधातुमाह । अद्वेष इत्यादि । अद्वेषः पक्षपातकृताप्रीतिपरिहारस्तत्त्वविषयः जिज्ञासा तत्पूर्विका तत्त्वज्ञानेच्छा शुश्रूषा बोधश्रोतःसिराकल्पा तत्त्वजिज्ञासापूर्विका श्रवणमाकर्णनं बोधोऽवगमः मीमांसा तत्त्वविचाररूपा ततः श्रवणादिपदानां द्वन्द्वः परिशुद्धा सर्वतो भावविशुद्धा प्रतिपत्तिर्मीमांसोत्तरकालभाविनीदमित्थमेवेति निश्चयाकारा परिच्छित्तिः तत्त्वविषयैव प्रवृत्तिः परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषया क्रिया प्रवृत्तिशब्दो द्विरावर्त्यते तेनायमर्थः तत्त्वे प्रवृत्तिरष्टाङ्गिकी अष्टभिरद्वेषादिभिरङ्गैर्निर्वृत्ता तेन मूलागमैकदेशागमे न द्वेषः कार्य इति ॥ १४ ॥

एवं सद्धर्मपरीक्षकादीन् भावान् प्रतिपाद्य समस्तप्रकरणार्थोपसंहारद्वारेण सदुपदेशदानायाह ॥

गर्भार्थं खल्वेषां भावानां यत्नतः समालोच्य । पुंसा प्रवर्त्तितव्यं कुशले न्यायः सतामेषः ॥ १५ ॥

य० गर्भार्थं हृदयगतार्थं भावार्थमितियावत् । खलुशब्दोऽवधारणे एषां प्राक्प्रक्रान्तानां भावानां पदार्थानां यत्नतः

सम्यगालोच्य गर्भार्थमेवोत्तानभूतमर्थ पुंसा पुरुषेण प्रवर्त्तितव्यं प्रवृत्तिर्व्विधेया
प्रयत्नात् । समालोच्य सूक्ष्मया प्रज्ञया सम्यगालोच्य गर्भार्थमेवोत्तानभूतमर्थ पुंसा पुरुषेण प्रवर्त्तितव्यं प्रवृत्तिर्व्विधेया प्रयत्नात् । समालोच्य सूक्ष्मया प्रज्ञया मार्ग्गः सतां सत्पुरुषाणां एष वर्त्तते नान्यः ॥ १५ ॥
कुशले पुण्ये कुशलहेतुत्त्वात् सदनुष्ठाने न्यायोऽविचलितरूपो मार्ग्गः सतां सत्पुरुषाणां एष वर्त्तते नान्यः ॥ १५ ॥

उ० एवं सद्धर्मपरीक्षकादिभावान् प्रतिपाद्य तत्फलोपदेशमाह । गर्भार्थमित्यादि । गर्भार्थं हृदयगतार्थं खलुशब्दोऽव-
धारणे एषां प्राक्प्रक्रान्तानां भावानां यत्नतः प्रयत्नात् समालोच्य सूक्ष्मप्रज्ञया विचार्य पुंसा पुरुषार्थप्रवृत्तेन कुशले सद-
नुष्ठाने प्रवर्त्तितव्यं न्यायोऽविचलितमार्ग्गः सतां सत्पुरुषाणामेष वर्त्तते नान्यः ॥ १५ ॥

कुतः पुनरेते भावा भवताऽभिहिताः किमर्थं वेत्याह ॥

एते प्रवचनतः खलु समुद्धृता मन्दमतिहितार्थं तु । आत्मानुस्मरणाय च भावा भवविरहसि-
द्धिफलाः ॥ १६ ॥ ॥ १६ ॥

य० एते प्रस्तुताः प्रवचनतः प्रशस्तं प्रगतमवगाढं वा वचनं प्रवचनम् । प्रकृष्टवचनं शेषागमापेक्षया प्रवचनं सूत्रतोऽ-
र्थतश्च द्वादशाङ्गम् । तस्मात्खलुशब्दो वाक्यालङ्कारे समेकीभावेनाऽविप्रतिपत्त्या उद्धृताः प्रथक् व्यवस्थापिता मन्दमतीनां
मन्दधियां हितार्थं तु हितप्रयोजनमेवात्मनोऽनुस्मरणाय च स्वयमेवानुस्मृतिनिमित्तं च भावाः पदार्था आदित आरभ्य
भवविरहः संसारविरहो मोक्षस्तस्य सिद्धिर्न्निष्पत्तिः सैव फलं येषां भावानां ते भवविरहसिद्धिफलाः ॥ १६ ॥ १६ ॥

उ० अथैते भावाः कुतोऽभिहिताः किमर्थं वेत्याह । एते इत्यादि ॥ एते प्रस्तुता भावाः प्रवचनतो द्वादशाङ्गात्
खलुशब्दो वाक्यालङ्कारे समुद्धृता एकवाक्यतया पृथक् स्थापिताः

मन्दमतीनां विस्तृतावगाहनाक्षमधियां हितार्थं तु हितायैव च पुनः आत्मनोऽनुस्मरणाय कीदृशा भावा आदित आरभ्य भवविरहो मोक्षस्तस्य सिद्धिर्निष्पत्तिः फलं येषां ते तथा ॥ १६ ॥ इति षोडशं षोडशकम् ॥

इदानीं ग्रन्थकारो गर्भार्थपरिज्ञानाय बहुश्रुतभक्तिमुपदर्शयन् स्ववचनप्रार्थनामाह ॥

**धर्म्मश्रवणे यत्नः सततं कार्यो बहुश्रुतसमीपे । हितकाङ्क्षिभिर्नृसिंहैर्वचनं ननु हारिभद्रमिदम् ॥१७॥**

य० दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्म्मः श्रुतचारित्ररूपस्तस्य श्रवणमाकर्णनमर्थतस्तस्मिन् धर्म्मश्रवणे यत्नः प्रयत्नः आदरः सततमनवरतं कार्यः कर्त्तव्यो बहुश्रुतसमीपे बहुश्रुतसन्निधाने हितकाङ्क्षिभिर्हिताभिलाषिभिर्नृसिंहैः पुरुषसिंहैः पुरुषोत्तमैरितियावत् । वचनं प्रार्थनारूपं नन्विति वितर्के एवं वितर्कयत यूयं हरिभद्रस्येदं हारिभद्रमिदमेवंविधं यदुत बहुश्रुतसमीपे धर्मश्रवणे यत्नो विधेयोऽथवा वचनमागमरूपं ननु निश्चितं हारि मनोहारि भद्रमिदं यतो वर्त्तते अतो वचनगतधर्म्मश्रवणे बहुश्रुतसमीपे एव यत्नः श्रेयान् । अबहुश्रुतेभ्यो धर्मश्रवणेऽपि विपरीतार्थोपपत्तेः प्रत्यवायसंभवादथवा हरिभद्रसूरेः स्तुतिं कुर्व्वाणोऽपर एव कश्चिदिदमाह । वचनं ननु हारिभद्रमिदम् । हरिभद्रसूरेरिदं धर्म्मगतं वचनं प्रकरणाश्रयं तस्माद्धर्म्मश्रवणे बहुश्रुतसमीप एव यत्नो विधेयोऽबहुश्रुतेभ्यो हरिभद्राचार्यवचनानुपलम्भादेवं वचनमाहात्म्यद्वारेण संस्तौति ॥

कृत्वा विवरणमेतत्पुण्यं यदवापि तेन भव्यजनः । अध्यास्तां षोडशकलाशशिमण्डलभास्वरं स्थानम् ॥१॥ ॥१७॥

इति षोडशकविवरणं समाप्तम् ॥

उ० अथ ग्रन्थकृद्गर्भार्थपरिज्ञानाय वहुश्रुतभक्तिमुपदिशन्नाह । धर्मेत्यादि । धर्मस्य श्रुतचारित्ररूपस्य श्रवणे यत्न आदरः सततमनवरतं कार्यो वहुश्रुतसमीपे हितकाङ्क्षिभिर्हितार्थिभिर्नृसिंहैः पुरुषोत्तमैः वचनं प्रार्थनारूपं नन्वितिवितर्के हारिभद्रं हरिभद्रसंवन्धीदं यद्वा ननु निश्चितं हारि मनोज्ञं भद्रमिदं वचो यद्वहुश्रुतेभ्य एव धर्मः श्रोतव्य इति अवहुश्रुतेभ्यो धर्मश्रवणे प्रत्यपायसम्भवात् । शिष्यकर्तृकेयमार्येत्यन्ये ॥ १७ ॥

इति महोपाध्यायश्रीकल्याणविजयगणिशिष्यमुख्यपण्डितश्रीलाभविजयग० शिष्यपण्डितश्रीजीतविजयग० सतीर्थपण्डितश्रीनयविजयगणिचरणकमलचञ्चरीकपण्डितश्रीपद्मविजयगणिसहोदरोपाध्यायश्रीयशोविजयगणिविरचिता योगदीपिकानाम्नी षोडशकवृत्तिः संपूर्णा ॥

एषा षोडशकव्याख्या संक्षिप्तार्थावगाहिनी । सिद्धाऽक्षततृतीयायां भूयादक्षयसिद्धये ॥ १ ॥ १७ ॥



॥ श्रीषोडशकसूत्रप्रकरणं समाप्तम् ॥

## ॥ श्रीमद्धरिभद्रसूरिकृतं मूलषोडशकम् ॥

प्रणिपत्य जिनं वीरं सद्धर्मपरीक्षकादिभावानाम्। लिङ्गादि भेदतः खलु वक्ष्ये किञ्चित्समासेन ॥ १ ॥
वालः पश्यति लिङ्गं मध्यमवुद्धिर्विचारयति वृत्तम्। आगमतत्त्वं तु वुधः परीक्षते सर्वयत्नेन ॥ २ ॥
वालो ह्यसदारम्भो मध्यमवुद्धिस्तु मध्यमाचारः। ज्ञेय इह तत्त्वमार्गे वुधस्तु मार्गानुसारी यः ॥ ३ ॥
वाह्यं लिङ्गमसारं तत्प्रतिवद्धा न धर्मनिष्पत्तिः। धारयति कार्यवशतो यस्माच्च विडम्वकोऽप्येतत् ॥ ४ ॥
वाह्यग्रन्थत्यागान्न चारु नत्त्वत्र तदितरस्यापि। कञ्चुकमात्रत्यागान्न हि भुजगो निर्विषो भवति ॥ ५ ॥
मिथ्याचारफलमिदं ह्यपरैरपि गीतमशुभभावस्य। सूत्रेऽप्यविकलमेतत्प्रोक्तममेध्योत्करस्यापि ॥ ६ ॥
वृत्तं चारित्रं खल्वसदारम्भविनिवृत्तिमत्तच्च। सदनुष्ठानं प्रोक्तं कार्ये हेतूपचारेण ॥ ७ ॥
परिशुद्धमिदं नियमादान्तरपरिणामतः सुपरिशुद्धात्। अन्यदतोऽन्यस्मादपि वुधविज्ञेयं त्वचारुतया ॥ ८ ॥
गुरुदोषारम्भितया तेष्वकरणयत्नतो निपुणधीभिः। सन्निन्दादेश्च तथा ज्ञायत एतन्नियोगेन ॥ ९ ॥
आगमतत्त्वं ज्ञेयं तद्दृष्टेष्टाविरुद्धवाक्यतया। उत्सर्गादिसमन्वितमलमैदम्पर्यशुद्धं च ॥ १० ॥
आत्मास्ति स परिणामी वद्धः सत्कर्मणा विचित्रेण। मुक्तश्च तद्वियोगाद्धिंसाहिंसादि तद्धेतुः ॥ ११ ॥
परलोकविधौ मानं वचनं तदतीन्द्रियार्थदृग्व्यक्तम्। सर्वमिदमनादि स्यादैदम्पर्यस्य शुद्धिरिति ॥ १२ ॥

गुरुपारतन्त्र्यमेव च तद्बहुमानात्सदाशयानुगतम् । परमगुरुप्राप्तेरिह बीजं तस्माच्च मोक्ष इति ॥ १० ॥
इत्यादि साधुवृत्तं मध्यमबुद्धेः सदा समाख्येयम् । आगमतत्त्वं तु परं बुधस्य भावप्रधानं तु ॥ ११ ॥
वचनाराधनया खलु धर्मस्तद्बाधया त्वधर्म इति । इदमत्र धर्मगुह्यं सर्वस्वं चैतदेवास्य ॥ १२ ॥
यस्मात्प्रवर्त्तकं भुवि निवर्त्तकं चान्तरात्मनो वचनम् । धर्मश्चैतत्संस्थो मौनीन्द्रं चैतदिह परमम् ॥ १३ ॥
अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति । हृदयस्थिते च तस्मिन्नियमात्सर्वार्थसंसिद्धिः ॥ १४ ॥
चिन्तामणिः परोऽसौ तेनैव भवति समरसापत्तिः । सैवेह योगिमाता निर्वाणफलप्रदा प्रोक्ता ॥ १५ ॥
इति यः कथयति धर्मं विज्ञायौचित्ययोगमनघमतिः । जनयति स एनमतुलं श्रोतृषु निर्वाणफलदमलम् ॥१६॥२॥
अस्य स्वलक्षणमिदं धर्मस्य बुधैः सदैव विज्ञेयम् । सर्वागमपरिशुद्धं यदादिमध्यान्तकल्याणम् ॥ १ ॥
धर्मश्चित्तप्रभवो यतः क्रियाधिकरणाश्रयं कार्यम् । मलविगमेनैतत्खलु पुष्ट्यादिमदेष विज्ञेयः ॥ २ ॥
रागादयो मलाः खल्वागमसद्योगतो विगम एषाम् । तदयं क्रियात एव हि पुष्टिः शुद्धिश्च चित्तस्य ॥ ३ ॥
पुष्टिः पुण्योपचयः शुद्धिः पापक्षयेण निर्मलता । अनुबन्धिनि द्वयेऽस्मिन् क्रमेण मुक्तिः परा ज्ञेया ॥ ४ ॥
न प्रणिधानाद्याशयसंविद्व्यतिरेकतोऽनुबन्धि तत् । भिन्नग्रन्थेर्निर्म्मलबोधवतः स्यादियं च परा ॥ ५ ॥
प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदतः प्रायः । धर्म्मज्ञैराख्यातः शुभाशयः पञ्चधाऽत्र विधौ ॥ ६ ॥

प्रणिधानं तत्समये स्थितिमत्तदधः कृपानुगं चैव । निरवद्यवस्तुविषयं परार्थनिष्पत्तिसारं च ॥ ७ ॥
तत्रैव तु प्रवृत्तिः शुभसारोपायसङ्गतात्यन्तम् । अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव ॥ ८ ॥
विघ्नजयस्त्रिविधः खलु विज्ञेयो हीनमध्यमोत्कृष्टः । मार्गे इह कण्टकज्वरमोहजयसमः प्रवृत्तिफलः ॥ ९ ॥
सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया । अधिके विनयादियुता हीने च दयादिगुणसारा ॥ १० ॥
सिद्धेश्चोत्तरकार्यं विनियोगोऽवन्ध्यमेतदेतस्मिन् । सत्यन्वयसम्पत्त्या सुन्दरमिति तत्परं यावत् ॥ ११ ॥
आशयभेदा एते सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः । भावोऽयमनेन विना चेष्टा द्रव्यक्रिया तुच्छा ॥ १२ ॥
अस्माच्च सानुबन्धाच्छुद्ध्यन्तोऽवाप्यते द्रुतं क्रमशः । एतदिह धर्मतत्त्वं परमो योगो विमुक्तिरसः ॥ १३ ॥
अमृतरसास्वादज्ञः कुभक्तरसलालितोऽपि बहुकालम् । त्यक्त्वा तत्क्षणमेनं वाञ्छत्युच्चैरमृतमेव ॥ १४ ॥
एवं त्वपूर्वकरणात्सम्यक्त्वामृतरसज्ञ इह जीवः । चिरकालासेवितमपि न जातु बहुमन्यते पापम् ॥ १५ ॥
यद्यपि कर्मनियोगात् करोति तत्तदपि भावशून्यमलम् । अत एव धर्मयोगात् क्षिप्रं तत्सिद्धिमाप्नोति ॥१६॥३॥
सिद्धस्य चास्य सम्यग्लिङ्गान्येतानि धर्मतत्त्वस्य । विहितानि तत्त्वविद्भिः सुखावबोधाय भव्यानाम् ॥ १ ॥
औदार्यं दाक्षिण्यं पापजुगुप्साथ निर्मलो बोधः । लिङ्गानि धर्मसिद्धेः प्रायेण जनप्रियत्वं च ॥ २ ॥
औदार्यं कार्पण्यत्यागाद्विज्ञेयमाशयमहत्त्वम् । गुरुदीनादिष्वौचित्यवृत्ति कार्ये तदत्यन्तम् ॥ ३ ॥

दाक्षिण्यं परकृत्येष्वपि योगपरः शुभाशयो ज्ञेयः । गाम्भीर्यधैर्यसचिवो मात्सर्यविघातकृत्परमः ॥ ४ ॥
पापजुगुप्सा तु तथा सम्यक्परिशुद्धचेतसा सततम् । पापोद्वेगोऽकरणं तदचिन्ता चेत्यनुक्रमतः ॥ ५ ॥
निर्मलबोधोऽप्येवं शुश्रूषाभावसंभवो ज्ञेयः । शमगर्भशास्त्रयोगाच्छ्रुतचिन्ताभावनासारः ॥ ६ ॥
युक्तं जनप्रियत्वं शुद्धं तद्धर्मसिद्धिफलदमलम् । धर्मप्रशंसनादेर्बीजाधानादिभावेन ॥ ७ ॥
आरोग्ये सति यद्वद् व्याधिविकारा भवन्ति नो पुंसाम् । तद्वद्धर्मारोग्ये पापविकारा अपि ज्ञेयाः ॥ ८ ॥
तन्नास्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोहः । अरुचिर्न धर्मपथ्ये न च पापा क्रोधकण्डूतिः ॥ ९ ॥
गम्यागम्यविभागं त्यक्त्वा सर्वत्र वर्त्तते जन्तुः । विषयेष्ववितृप्तात्मा यतो भृशं विषयतृष्णेयम् ॥ १० ॥
गुणतस्तुल्ये तत्त्वे संज्ञाभेदागमान्यथादृष्टिः । भवति यतोऽसावधमो दोषः खलु दृष्टिसंमोहः ॥ ११ ॥
धर्मश्रवणेऽवज्ञा तत्त्वरसास्वादविमुखता चैव । धार्मिकसत्त्वासक्तिश्च धर्मपथ्येऽरुचेर्लिङ्गम् ॥ १२ ॥
सत्येतरदोषश्रुतिभावादन्तर्बहिश्च यत्स्फुरणम् । अविचार्य कार्यतत्त्वं तच्चिह्नं क्रोधकण्डूतेः ॥ १३ ॥
एते पापविकारा न प्रभवन्त्यस्य धीमतः सततम् । धर्मामृतप्रभावाद्भवन्ति मैत्र्यादयश्च गुणाः ॥ १४ ॥
परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥ १५ ॥
एतज्जिनप्रणीतं लिङ्गं खलु धर्मसिद्धिमज्जन्तोः । पुण्यादिसिद्धिसिद्धेः सिद्धं सद्धेतुभावेन ॥ १६ ॥ ४ ॥

एवं सिद्धे धर्मे सामान्येनेह लिङ्गसंयुक्ते । नियमेन भवति पुंसां लोकोत्तरतत्त्वसम्प्राप्तिः ॥ १ ॥
आद्यं भावारोग्यं बीजं चैपा परस्य तस्यैव । अधिकारिणो नियोगाच्चरम इयं पुद्गलावर्त्ते ॥ २ ॥
स भवति कालादेव प्राधान्येन सुकृतादिभावेऽपि । ज्वरशमनौपधसमयवदिति समयविदो विदुर्निपुणम् ॥ ३ ॥
नागमवचनं तदधः सम्यक्परिणमति नियम एपोऽत्र । शमनीयमिवाभिनवे ज्वरोदयेऽकाल इति कृत्वा ॥ ४ ॥
आगमदीपेऽध्यारोपमण्डलं तत्त्वतोऽसदेव तथा । पश्यन्त्यपवादात्मकमविपय इह मन्दधीनयनाः ॥ ५ ॥
तत एवाविधिसेवादानादौ तत्प्रसिद्धफल एव । तत्तत्त्वदृशामेपा पापा कथमन्यथा भवति ॥ ६ ॥
येपामेपा तेपामागमवचनं न परिणतं सम्यक् । अमृतरसास्वादज्ञः को नाम विपे प्रवर्त्तेत ॥ ७ ॥
तस्माच्चरमे नियमादागमवचनमिह पुद्गलावर्त्ते । परिणमति तत्त्वतः खलु स चाधिकारी भवत्यस्याः ॥ ८ ॥
आगमवचनपरिणतिर्भवरोगसदौपधं यदनपायम् । तदिह परः सद्बोधः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥[1]
दशसंज्ञाविष्कम्भणयोगे सत्यविकलं ह्यदो भवति । परहितनिरतस्य सदा गम्भीरोदारभावस्य ॥ १० ॥
सर्वज्ञवचनमागमवचनं यत्परिणते ततस्तस्मिन् । नासुलभमिदं सर्वं ह्युभयमलपरिक्षयात्पुंसाम् ॥ ११ ॥
विधिसेवा दानादौ सूत्रानुगता तु सा नियोगेन । गुरुपारतन्त्र्ययोगादौचित्याच्चैव सर्वत्र ॥ १२ ॥

१ आगमवचनपरिणतिर्भवरोगसदौपध भवति यस्मात् । निरपायं तदिह परः सदनुष्ठानस्य हेतुरिति ॥ ९ ॥

न्यायात्तं स्वल्पमपि हि भृत्यानुपरोधतो महादानम् । दीनतपस्व्यादौ गुर्वनुज्ञया दानमन्यत्तु ॥ १३ ॥
देवगुणपरिज्ञानात्तद्भावानुगतमुत्तमं विधिना । स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम् ॥ १४ ॥
एवं गुरुसेवादि च काले सद्योगविघ्नवर्जनया । इत्यादिकृत्यकरणं लोकोत्तरतत्त्वसम्प्राप्तिः ॥ १५ ॥
इतरेतरसापेक्षा त्वेषा पुनराप्तवचनपरिणत्या । भवति यथोदितनीत्या पुंसां पुण्यानुभावेन ॥ १६ ॥ ५ ॥
अस्यां सत्यां नियमाद्विधिवज्जिनभवनकारणविधानम् । सिध्यति परमफलमतः शुभकार्यारम्भकत्वेन ॥ १ ॥
न्यायार्जितवित्तेशो मतिमान् स्फीताशयः सदाचारः । गुर्वादिमतो जिनभवनकारणस्याधिकारीति ॥ २ ॥
कारणविधानमेतच्छुद्धा भूमिर्दलं च दार्वादि । भृतकानतिसन्धानं स्वाशयवृद्धिः समासेन ॥ ३ ॥
शुद्धा तु वास्तुविद्याविहिता सन्न्यायतश्च योपात्ता । न परोपतापहेतुश्च सा जिनेन्द्रैः समाख्याता ॥ ४ ॥
शास्त्रबहुमानतः खलु सच्चेष्टातश्च धर्मनिष्पत्तिः । परपीडात्यागेन च विपर्ययात्पापसिद्धिरिव ॥ ५ ॥
तत्रासन्नोऽपि जनोऽसम्बन्ध्यपि दानमानसत्कारैः । कुशलाशयवान् कार्यो नियमाद्बोध्यङ्गमयमस्य ॥ ६ ॥
दलमिष्टकादि तदपि च शुद्धं तत्कारिवर्गतः क्रीतम् । उचितक्रयेण यत्स्यादानीतं चैव विधिना तु ॥ ७ ॥
दार्वपि च शुद्धमिह यन्नानीतं देवताद्युपवनादेः । प्रगुणं सारवदभिनवमुच्चैर्ग्रन्थ्यादिरहितं च ॥ ८ ॥
सर्वत्र शकुनपूर्वं ग्रहणादावत्र वर्तितव्यमिति । पूर्णकलशादिरूपश्चित्तोत्साहानुगः शकुनः ॥ ९ ॥

भृतका अपि कर्त्तव्या य इह विशिष्टाः स्वभावतः केचित् । यूयमपि गोष्ठिका इह वचनेन सुखं तु ते स्थाप्याः ॥१०॥
अतिसन्धानं चैषां कर्त्तव्यं न खलु धर्म्मंमित्राणाम् । न व्याजादिह धर्मो भवति तु शुद्धाशयादेव ॥ ११ ॥
देवोद्देशेनैतद्गृहिणां कर्तव्यमित्यलं शुद्धः । अनिदानः खलु भावः स्वाशय इति गीयते तज्ज्ञैः ॥ १२ ॥
प्रतिदिवसमस्य वृद्धिः कृताकृतप्रत्युपेक्षणविधानात् । एवमिदं क्रियमाणं शस्तमिह निदर्शितं समये ॥ १३ ॥
एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम् । अभ्युदयाव्युच्छित्त्या नियमादपवर्गबीजमिति ॥ १४ ॥
देयं तु न साधुभ्यस्तिष्ठन्ति यथा च ते तथा कार्यम् । अक्षयनीव्या ह्येवं ज्ञेयमिदं वंशतरकाण्डम् ॥ १५ ॥
यतनातो न च हिंसा यस्मादेषैव तन्निवृत्तिफला । तदधिकनिवृत्तिभावाद्विहितमतोऽदुष्टमेतदिति ॥ १६ ॥ ६ ॥
जिनभवने तद्बिम्बं कारयितव्यं द्रुतं तु बुद्धिमता । साधिष्ठानं ह्येवं तद्भवनं वृद्धिमद्भवति ॥ १ ॥
जिनबिम्बकारणविधिः काले पूजापुरस्सरं कर्तुः । विभवोचितमूल्याऽर्पणमनघस्य शुभेन भावेन ॥ २ ॥
नार्पणमितरस्य तथा युक्त्या वक्तव्यमेव मूल्यमिति । काले च दानमुचितं शुभभावेनैव विधिपूर्वम् ॥ ३ ॥
चित्तविनाशो नैवं प्रायः सञ्जायते द्वयोरपि हि । अस्मिन् व्यतिकर एष प्रतिषिद्धो धर्मतत्त्वज्ञैः ॥ ४ ॥
एष द्वयोरपि महान् विशिष्टकार्यप्रसाधकत्वेन । सम्बन्ध इह क्षुण्णं न मिथः सन्तः प्रशंसन्ति ॥ ५ ॥
यावन्तः परितोषाः कारयितुस्तत्समुद्भवाः केचित् । तद्बिम्बकारणानीह तस्य तावन्ति तत्त्वेन ॥ ६ ॥

अप्रीतिरपि च तस्मिन् भगवति परमार्थनीतितो ज्ञेया । सर्वापायनिमित्तं ह्येषा पापा न कर्त्तव्या ॥ ७ ॥
अधिकगुणस्थैर्नियमात् कारयितव्यं स्वदौर्हृदैर्युक्तम् । न्यायार्जितवित्तेन तु जिनबिम्बं भावशुद्धेन ॥ ८ ॥
अत्रावस्थात्रयगामिनो बुधैर्दौर्हृदाः समाख्याताः । बालाद्याश्चैत्ता यत्तत्क्रीडनकादि देयमिति ॥ ९ ॥
यद्यस्य सत्कमनुचितमिह वित्ते तस्य तज्जमिह पुण्यम् । भवतु शुभाशयकरणादित्येतद्भावशुद्धं स्यात् ॥ १० ॥
मन्त्रन्यासश्च तथा प्रणवनमःपूर्वकं च तन्नाम । मन्त्रः परमो ज्ञेयो मननत्राणे ह्यतो नियमात् ॥ ११ ॥
बिम्बं महत्सुरूपं कनकादिमयं च यः खलु विशेषः । नास्मात्फलं विशिष्टं भवति तु तदिहाशयविशेषात् ॥ १२ ॥
आगमतन्त्रः सततं तद्भक्त्यादिलिङ्गसंसिद्धः । चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशेषः ॥ १३ ॥
एवंविधेन यद्बिम्बकारणं तद्वदन्ति समयविदः । लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च ॥ १४ ॥
लोकोत्तरं तु निर्वाणसाधकं परमफलमिहाश्रित्य । अभ्युदयोऽपि हि परमो भवति त्वत्रानुषङ्गेण ॥ १५ ॥
कृषिकरण इव पलालं नियमादत्रानुषङ्गिकोऽभ्युदयः । फलमिह धान्यावाप्तिः परमं निर्वाणमिव बिम्बात् ॥१६॥७॥
निष्पन्नस्यैवं खलु जिनबिम्बस्योदिता प्रतिष्ठाशु । दशदिवसाभ्यन्तरतः सा च त्रिविधा समासेन ॥ १ ॥
व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाद्येति समयविदः ॥ २ ॥
ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया । सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ ३ ॥

भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत्स्थापनमिह वचननीत्योच्चैः ॥ ४ ॥
बीजमिदं परमं यत्परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैपैवेति विज्ञेया ॥ ५ ॥
मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न देवतायास्तु । स्थाप्ये न च मुख्येयं तदधिष्ठानाद्यभावेन ॥ ६ ॥
इज्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तदतत्त्वकल्पनैपा बालक्रीडासमा भवति ॥ ७ ॥
भावरसेन्द्रात्तु ततो महोदयाज्जीवतास्वरूपस्य । कालेन भवति परमाऽप्रतिबद्धा सिद्धकाञ्चनता ॥ ८ ॥
वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैपा । इतिकर्त्तव्यतयाऽतः सफलैपाप्यत्र भावविधौ ॥ ९ ॥
एपा च लोकसिद्धा शिष्टजनापेक्षयाऽखिलैवेति । प्रायो नानात्वं पुनरिह मन्त्रगतं बुधाः प्राहुः ॥ १० ॥
आवाहनादि सर्वं वायुकुमारादिगोचरं चात्र । सम्मार्जनादिसिद्ध्यै कर्त्तव्यं मन्त्रपूर्वं तु ॥ ११ ॥
न्याससमये तु सम्यक्सिद्धानुस्मरणपूर्वकमसङ्गम् । सिद्धौ तत्स्थापनमिव कर्त्तव्यं स्थापनं मनसा ॥ १२ ॥
बीजन्यासः सोऽयं मुक्तौ भावविनिवेशतः परमः । सकलावञ्चकयोगप्राप्तिफलोऽभ्युदयसचिवश्च ॥ १३ ॥
लवमात्रमयं नियमादुचितोचितभाववृद्धिकरणेन । क्षान्त्यादियुतैर्मैत्र्यादिसङ्गतैर्बृंहणीय इति ॥ १४ ॥
निरपायः सिद्धार्थः स्वात्मस्थो मन्त्रराडसङ्गश्च । आनन्दो ब्रह्मरसश्चिन्त्यस्तत्त्वज्ञमुष्टिरियम् ॥ १५ ॥
अष्टौ दिवसान् यावत् पूजाऽविच्छेदतोऽस्य कर्त्तव्या । दानं च यथाविभवं दातव्यं सर्वसत्त्वेभ्यः ॥ १६ ॥ ८ ॥

स्नानविलेपनसुसुगन्धिपुष्पधूपादिभिः शुभैः कान्तम् । विभवानुसारतो यत्काले नियतं विधानेन ॥ १ ॥
अनुपकृतपरहितरतः शिवदस्त्रिदशेशपूजितो भगवान् । पूज्यो हितकामानामितिभक्त्या पूजनं पूजा ॥ २ ॥
पञ्चोपचारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात् । ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति ॥ ३ ॥
न्यायार्जितेन परिशोधितेन वित्तेन निरवशेषेयम् । कर्तव्या बुद्धिमता प्रयुक्तसत्सिद्धियोगेन ॥ ४ ॥
शुचिनात्मसंयमपरं सितशुभवस्त्रेण वचनसारेण । आशंसारहितेन च तथा तथा भाववृद्ध्योच्चैः ॥ ५ ॥
पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः । आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ ६ ॥
पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः । अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥ ७ ॥
शुभभावार्थं पूजा स्तोत्रेभ्यः स च परः शुभो भवति । सद्भूतगुणोत्कीर्त्तनसंवेगात्समरसापत्त्या ॥ ८ ॥
कायादियोगसारा त्रिविधा तच्छुद्ध्युपात्तवित्तेन । या तदतिचाररहिता सा परमान्ये तु समयविदः ॥ ९ ॥
विघ्नोपशमन्याद्या गीताभ्युदयप्रसाधनी चान्या । निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः ॥ १० ॥
प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता । आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम् ॥ ११ ॥
त्रैलोक्यसुन्दरं यन्मनसापादयति तत्तु चरमायाम् । अखिलगुणाधिकसद्योगसारसद्ब्रह्मयागपरः ॥ १२ ॥
स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि । कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः ॥ १३ ॥

कूपोदाहरणादिह कायवधोऽपि गुणवान् मतो गृहिणः । मन्त्रादेरिव च ततस्तदनुपकारेऽपि फलभावः ॥ १४ ॥
कृतकृत्यत्वादेव च तत्पूजा फलवती गुणोत्कर्षात् । तस्मादन्यथैषाऽ । रम्भवतोऽन्यत्र विमलधियः ॥ १५ ॥
इति जिनपूजां धन्यः शृण्वन् कुर्वंस्तदोचितां नियमात् । भवविरहकारणं खलु सदनुष्ठानं द्रुतं लभते ॥ १६ ॥ ९ ॥
सदनुष्ठानमतः खलु बीजन्यासात्प्रशान्तवाहितया । सञ्जायते नियोगात्पुंसां पुण्योदयसहायम् ॥ १ ॥
तत्प्रीतिभक्तिवचनासङ्गोपपदं चतुर्विधं गीतम् । तत्त्वाभिज्ञैः परमपदसाधनं सर्वमेवैतत् ॥ २ ॥
यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति कर्त्तुः । शेषत्यागेन करोति यच्च तत्प्रीत्यनुष्ठानम् ॥ ३ ॥
गौरवविशेषयोगाद्बुद्धिमतो यद्विशुद्धतरयोगम् । क्रिययेतरतुल्यमपि ज्ञेयं तद्भक्त्यनुष्ठानम् ॥ ४ ॥
अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृत्यमनयोर्ज्ञातं स्यात्प्रीतिभक्तिगतम् ॥ ५ ॥
वचनात्मिका प्रवृत्तिः सर्वत्रौचित्ययोगतो या तु । वचनानुष्ठानमिदं चारित्रवतो नियोगेन ॥ ६ ॥
यत्त्वभ्यासातिशयात्सात्मीभूतमिव चेष्ट्यते सद्भिः । तदसङ्गानुष्ठानं भवति त्वेतत्तदावेधात् ॥ ७ ॥
चक्रभ्रमणं दण्डात्तदभावे चैव यत्परं भवति । वचनासङ्गानुष्ठानयोस्तु तज्ज्ञापकं ज्ञेयम् ॥ ८ ॥
अभ्युदयफले चाद्ये निःश्रेयससाधने तथा चरमे । एतदनुष्ठानानां विज्ञेये इह गतापाये ॥ ९ ॥
उपकार्यपकारिविपाकवचनधर्मोत्तरा मता क्षान्तिः । आद्यद्वये त्रिभेदा चरमद्वितये द्विभेदेति ॥ १० ॥

चरमाद्यायां सूक्ष्मा अतिचाराः प्रायशोऽतिविरलाश्च । आद्यद्वये त्वमी स्युः स्थूलाश्च तथा घनाश्चैव ॥ ११ ॥
श्रुतमयमात्रापोहाच्चिन्तामयभावनामये भवतः । ज्ञाने परे यथार्हं गुरुभक्तिविधानसल्लिङ्गे ॥ १२ ॥
उदकपयोऽमृतकल्पं पुंसां सज्ज्ञानमेवमाख्यातम् । विधियत्नवत्तु गुरुभिर्विपयतृडपहारि नियमेन ॥ १३ ॥
शृण्वन्नपि सिद्धान्तं विषयपिपासातिरेकतः पापः । प्राप्नोति न संवेगं तदापि यः सोऽचिकित्स्य इति ॥ १४ ॥
नैवंविधस्य शस्तं मण्डल्युपवेशनप्रदानमपि । कुर्वन्नेतद्गुरुरपि तदधिकदोषोऽवगन्तव्यः ॥ १५ ॥
यः शृण्वन्संवेगं गच्छति तस्याद्यमिह मतं ज्ञानम् । गुरुभक्त्यादिविधानात्कारणमेतद् द्वयस्येष्टम्॥ १६ ॥ १० ॥
शुश्रूषा चेहाद्यं लिङ्गं खलु वर्णयन्ति विद्वांसः । तदभावेऽपि श्रावणमसिरावनिकूपखननसमम् ॥ १ ॥
शुश्रूषापि द्विविधा परमेतरभेदतो बुधैरुक्ता । परमा क्षयोपशमतः परमाच्छ्रवणादिसिद्धिफला ॥ २ ॥
यूनो वैदग्ध्यवतः कान्तायुक्तस्य कामिनोऽपि दृढम् । किन्नरगेयश्रवणादधिको धर्मश्रुतौ रागः ॥ ३ ॥
गुरुभक्तिः परमास्यां विधौ प्रयत्नस्तथाऽऽदृतिः[1] करणे । सद्ग्रन्थाप्तिः श्रवणं तत्त्वाभिनिवेशपरमफलम् ॥ ४ ॥
विपरीता त्वितरा स्यात्प्रायोऽनर्थाय देहिनां सा तु । या सुसनृपकथानकशुश्रूषावत्स्थिता लोके ॥ ५ ॥
ऊहादिरहितमाद्यं तद्युक्तं मध्यमं भवेज्ज्ञानम् । चरमं हितकरणफलं विपर्ययो मोहतोऽन्य इति ॥ ६ ॥

---

१ धृतिरिति क्वचित्पुस्तके पाठान्तरम् ।

वाक्यार्थमात्रविषयं कोष्ठकगतबीजसन्निभं ज्ञानम् । श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ॥ ७ ॥
यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् । उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत्स्यात् ॥ ८ ॥
ऐदम्पर्यगतं यद्विध्यादौ यत्नवत्तथैवोच्चैः । एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ ९ ॥
आद्य इह मनाक्पुंसस्तद्रागाद्दर्शनग्रहो भवति । न भवत्यसौ द्वितीये चिन्तायोगात् कदाचिदपि ॥ १० ॥
चारिचरकसञ्जीव(वि)न्यचरकचारणविधानतश्चरमे । सर्वत्र हिता वृत्तिर्गाम्भीर्यात्समरसापत्त्या ॥ ११ ॥
गुर्वादिविनयरहितस्य यत्तु मिथ्यात्वदोषतो वचनात् । दीप इव मण्डलगतो बोधः स विपर्ययः पापः ॥१२॥
दण्डीखण्डनिवसनं भस्मादिविभूषितं सतां शोच्यम् । पश्यत्यात्मानमलं ग्रही नरेन्द्रादपि ह्यधिकम् ॥ १३ ॥
मोहविकारसमेतः पश्यत्यात्मानमेवमकृतार्थम् । तद्व्यत्ययलिङ्गरतं कृतार्थमिति तद्ग्रहादेव ॥ १४ ॥
सम्यग्दर्शनयोगाज् ज्ञानं तद्ग्रन्थिभेदतः परमम् । सोऽपूर्वकरणतः स्याज्ज्ञेयं लोकोत्तरं तच्च ॥ १५ ॥
लोकोत्तरस्य तस्मान्महानुभावस्य शान्तचित्तस्य । औचित्यवतो ज्ञानं शेषस्य विपर्ययो ज्ञेयः ॥ १६ ॥ ११ ॥
अस्मिन्सति दीक्षाया अधिकारी तत्त्वतो भवति सत्त्वः । इतरस्य पुनर्दीक्षा वसन्तनृपसन्निभा ज्ञेया ॥ १ ॥
श्रेयोदानादशिवक्षपणाच्च सतां मतेह दीक्षेति । सा ज्ञानिनो नियोगाद्यथोदितस्यैव साध्वीति ॥ २ ॥
यो निरनुबन्धदोषाच्छ्राद्धोऽनाभोगवान् वृजिनभीरुः । गुरुभक्तो ग्रहरहितः सोऽपि ज्ञान्येव तत्फलतः ॥ ३ ॥

चक्षुष्मानेकः स्यादन्धोऽन्यस्तन्मतानुवृत्तिपरः । गन्तारौ गन्तव्यं प्राप्नुत एतौ युगपदेव ॥ ४ ॥
यस्यास्ति सत्क्रियायामित्थं सामर्थ्ययोग्यताऽविकला । गुरुभावप्रतिबन्धाद्दीक्षोचित एव सोऽपि किल ॥ ५ ॥
देयाऽस्मै विधिपूर्वं सम्यक्तन्त्रानुसारतो दीक्षा । निर्वाणबीजमेपेत्यनिष्टफलदान्यथात्यन्तम् ॥ ६ ॥
देशसमग्राख्येयं विरतिर्न्यासोऽत्र तद्वति च सम्यक् । तन्नामादिस्थापनमविद्रुतं स्वगुरुयोजनतः ॥ ७ ॥
नामनिमित्तं तत्त्वं तथा तथा चोद्धृतं पुरा यदिह । तत्स्थापना तु दीक्षा तत्त्वेनान्यस्तदुपचारः ॥ ८ ॥
कीर्त्यारोग्यध्रुवपदसम्प्राप्तेः सूचकानि नियमेन । नामादीन्याचार्या वदन्ति तत्तेषु यतितव्यम् ॥ ९ ॥
तत्संरकारादेषा दीक्षा सम्पद्यते महापुंसः । पापविपापगमात् खलु सम्यग्गुरुधारणायोगात् ॥ १० ॥
सम्पन्नायां चास्यां लिङ्गं व्यावर्णयन्ति समयविदः । धर्मैकनिष्ठतैव हि शेषत्यागेन विधिपूर्वम् ॥ ११ ॥
वचनक्षान्तिरिहादौ धर्मक्षान्त्यादिसाधनं भवति । शुद्धं च तपो नियमाद्यमश्च सत्यं च शौचं च ॥ १२ ॥
आकिञ्चन्यं मुख्यं ब्रह्मापि परं सदागमविशुद्धम् । सर्वं शुक्लमिदं खलु नियमात्संवत्सरादूर्ध्वम् ॥ १३ ॥
ध्यानाध्ययनाभिरतिः प्रथमं पश्चात्तु भवति तन्मयता । सूक्ष्मार्थालोचनया संवेगः स्पर्शयोगश्च ॥ १४ ॥
स्पर्शस्तत्त्वाप्तिः संवेदनमात्रमविदितं त्वन्यत् । वन्ध्यमपि स्यादेतत्स्पर्शरत्वक्षेपतत्फलदः ॥ १५ ॥
व्याध्यभिभूतो यद्वन्निर्व्विण्णस्तेन तत्क्रियां यत्नात् । सम्यक्करोति तद्वद्दीक्षित इह साधुसचेष्टाम् ॥ १६ ॥ १२ ॥

गुरुविनयः स्वाध्यायो योगाभ्यासः परार्थकरणं च । इतिकर्त्तव्यतया सह विज्ञेया साधुसच्चेष्टा ॥ १ ॥
औचित्याद्गुरुवृत्तिर्बहुमानस्तत्कृतज्ञताचित्तम् । आज्ञायोगस्तत्सत्यकरणता चेति गुरुविनयः ॥ २ ॥
यत्तु खलु वाचनादेरासेवनमत्र भवति विधिपूर्वम् । धर्मकथान्तं क्रमशस्तत्स्वाध्यायो विनिर्दिष्टः ॥ ३ ॥
स्थानोर्णार्थालम्बनतदन्ययोगपरिभावनं सम्यक् । परतत्त्वयोजनमलं योगाभ्यास इति तत्त्वविदः ॥ ४ ॥
विहितानुष्ठानपरस्य तत्त्वतो योगशुद्धिसचिवस्य । भिक्षाटनादि सर्व्वं परार्थकरणं यतेर्ज्ञेयम् ॥ ५ ॥
सर्वत्रानाकुलता यतिभावाव्ययपरा समासेन । कालादिग्रहणविधौ क्रियेतिकर्त्तव्यता भवति ॥ ६ ॥
इति चेष्टावत उच्चैर्विशुद्धभावस्य सद्यतेः क्षिप्रम् । मैत्रीकरुणामुदितोपेक्षाः किल सिद्धिमुपयान्ति ॥ ७ ॥
एताश्चतुर्विधाः खलु भवन्ति सामान्यतश्चतस्रोऽपि । एतद्भावपरिणतावन्ते मुक्तिर्न तत्रैताः ॥ ८ ॥
उपकारिस्वजनेतरसामान्यगता चतुर्विधा मैत्री । मोहासुखसंवेगान्यहितयुता चैव करुणेति ॥ ९ ॥
सुखमात्रे सद्धेतावनुबन्धयुते परे च मुदिता तु । करुणानुबन्धनिर्वेदतत्त्वसारा ह्युपेक्षेति ॥ १० ॥
एताः खल्वभ्यासात्क्रमेण वचनानुसारिणां पुंसाम् । सद्वृत्तानां सततं श्राद्धानां परिणमन्त्युच्चैः ॥ ११ ॥
एतद्रहितं तु तथा तत्त्वाभ्यासात्परार्थकार्येव । सद्बोधमात्रमेव हि चित्तं निष्पन्नयोगानाम् ॥ १२ ॥
अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः । कुलयोग्यादीनामिह तन्मूलाधानयुक्तानाम् ॥ १३ ॥

अविराधनया यतते यस्तस्यायमिह सिद्धिमुपयाति । गुरुविनयः श्रुतगर्भो मूलं चास्या अपि ज्ञेयः ॥ १४ ॥
सिद्धान्तकथा सत्सङ्गमश्च मृत्युपरिभावनं चैव । दुष्कृतसुकृतविपाकालोचनमथ मूलमस्यापि ॥ १५ ॥
एतस्मिन् खलु यत्नो विदुषा सम्यक् सदैव कर्त्तव्यः । आमूलमिदं परमं सर्वस्य हि योगमार्ग्गस्य ॥ १६ ॥१३॥
सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । जिनरूपध्यानं खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥ १ ॥
अष्टपृथग्जनचित्तत्यागाद्योगिकुलचित्तयोगेन । जिनरूपं ध्यातव्यं योगविधावन्यथा दोषः ॥ २ ॥
खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गैः । युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान् ॥ ३ ॥
खेदे दार्ढ्याभावान्न प्रणिधानमिह सुन्दरं भवति । एतच्चेह प्रवरं कृपिकर्मणि सलिलवज्ज्ञेयम् ॥ ४ ॥
उद्वेगे विद्वेषाद्विष्टिसमं करणमस्य पापेन । योगिकुलजन्मबाधकमलमेतत्तद्विदामिष्टम् ॥ ५ ॥
क्षेपेऽपि चाप्रबन्धादिष्टफलसमृद्धये न जात्वेतत् । नासकृदुत्पाटनतः शालिरपि फलावहः पुंसः ॥ ६ ॥
उत्थाने निर्वेदात्करणमकरणोदयं सदैवास्य । अत्यागत्यागोचितमेतत्तु स्वसमयेऽपि मतम् ॥ ७ ॥
भ्रान्तौ विभ्रमयोगान्न हि संस्कारः कृतेतरादिगतः । तदभावे तत्करणं प्रक्रान्तविरोध्यनिष्टफलम् ॥ ८ ॥
अन्यमुदि तत्र रागात्तदनादरताऽर्थतो महापाया । सर्वानर्थनिमित्तं मुद्विषयाङ्गारवृष्ट्याभा ॥ ९ ॥
रुजि निजजात्युच्छेदात् करणमपि हि नेष्टसिद्धये नियमात् । अस्येत्यननुष्ठानं तेनैतद्वन्ध्यफलमेव ॥ १० ॥

सामर्थ्ययोगतो या तत्र दिदृक्षेत्यसङ्गशक्त्याढ्या । सानालम्बनयोगः प्रोक्तस्तद्दर्शनं यावत् ॥ ८ ॥
तत्राप्रतिष्ठितोऽयं यतः प्रवृत्तश्च तत्त्वतरतत्र । सर्वोत्तमानुजः खलु तेनानालम्बनो गीतः ॥ ९ ॥
द्रागस्मात्तद्दर्शनमिषुपातज्ञातमात्रतो ज्ञेयम् । एतच्च केवलं तज्ज्ञानं यत्तत्परं ज्योतिः ॥ १० ॥
आत्मस्थं त्रैलोक्यप्रकाशकं निष्क्रियं परानन्दम् । तीतादिपरिच्छेदकमलं ध्रुवं चेति समयज्ञाः ॥ ११ ॥
एतद्योगफलं तत्परापरं दृश्यते परमनेन । तत्तत्त्वं यद्दृष्ट्वा निवर्त्तते दर्शनाकाङ्क्षा ॥ १२ ॥
तनुकरणादिविरहितं तच्चाचिन्त्यगुणसमुदयं सूक्ष्मम् । त्रैलोक्यमस्तकस्थं निवृत्तजन्मादिसङ्क्लेशम् ॥ १३ ॥
ज्योतिः परं परस्तात्तमसो यद्गीयते महामुनिभिः । आदित्यवर्णममलं ब्रह्माद्यैरक्षरं ब्रह्म ॥ १४ ॥
नित्यं प्रकृतिवियुक्तं लोकालोकावलोकनाभोगम् । स्तिमिततरङ्गोदधिसममवर्णमस्पर्शमगुरुलघु ॥ १५ ॥
सर्वाबाधारहितं परमानन्दसुखसङ्गतमसङ्गम् । निःशेषकलातीतं सदाशिवाद्यादिपदवाच्यम् ॥ १६ ॥ १५ ॥
एतद्दृष्ट्वा तत्त्वं परममनेनैव समरसापत्तिः । सञ्जायतेऽस्य परमा परमानन्द इति यामाहुः ॥ १ ॥
सैषाऽविद्यारहितावस्थापरमात्मशब्दवाच्येति । एषैव च विज्ञेया रागादिविवर्जिता तथता ॥ २ ॥
वैशेषिकगुणरहितः पुरुषोऽस्यामेव भवति तत्त्वेन । विध्यातदीपकल्पस्य हन्त जात्यन्तराप्राप्तेः ॥ ३ ॥
एवं पशुत्वविगमो दुःखान्तो भूतविगम इत्यादि । अन्यदपि तन्त्रसिद्धं सर्वमवस्थान्तरेऽत्रैव ॥ ४ ॥

# आ फंडमाथी तयार थयेला बीजां वेचवाना पुस्तकोनुं सूची पत्र.

१–वीतरागस्तोत्र—श्रीमद् हेमचन्द्राचार्यकृत सूल, प्रभानन्दसूरिकृतविवरण, अने श्रीविशालराज शिष्यकृत-अवचूरिसहित. किम्मत रु–०–८–०

२–श्रीश्रमणप्रतिक्रमणसूत्रवृत्तिः—पूर्वाचार्यकृत. आने पन्यासजी केशरविजयगणिए शोधेल छे. ॥ ॥ ०–१–६

३–श्रीस्याद्वादभाषा—आने श्रीमच्छुभविजयगणिए रचेलो छे, अने पन्यासजी आनंदसागर गणिए शोधेलो छे. ॥ ॥ ०–१–६

४–श्रीपक्खीसूत्र—आमां पाक्षिकसूत्र अने खामणा उपरनी श्रीयशोदेवसूरिकृतटीकानो समावेश करवामां आव्योछे. अने श्रीआनंदसागरजीए शोध्योछे. ॥ ॥ ०–६–०

५–श्रीअध्यात्ममतपरीक्षा—आ ग्रन्थने न्यायाचार्य-श्रीयशोविजयजीए दिगम्बरमतना खण्डनमाटे टीकायुक्त रच्यो छे. आमां पछाडी जूदुं मूल पण लेवामा आव्युं छे. आने श्रीआनंदसागरजीए शोध्योछे. ॥ ॥ ०–६–०

६–षोडशकप्रकरणं—आ ग्रन्थमां श्रीमद् हरिभद्रसूरिकृतसूल, अने श्रीमद्यशोभद्र, तथा न्यायाचार्यश्रीयशोविजयकृत बन्ने टीकाओ, तथा पछाडी छूटुं मूल लेवामां आव्युंछे. आ ग्रन्थने योगनिष्ठ श्रीबुद्धिसागरजीए सुधार्योछे. ॥ ॥ ०–६–०

७–श्रीकल्पसूत्रवृत्तिः—आ ग्रन्थ श्रीविनयविजयोपाध्यायकृत 'सुबोधिका' टीका सहित छपाववामां आव्यो छे. आग्रन्थ पण पन्यासजी आनंदसागरजीए शोध्यो छे. लगभग ६०० पानानुं पुस्तक सुन्दर पाटलीयो साथे होवा छतां पण मूल्य घणुं ओछुं राखवामां आवेल छे. ॥ ॥ ०–१२–०

पुस्तको वेचातीमळवानुं ठेकाणुं—

**शा० मगनलाल वेलचंद.**

के० ऑ० शेठ देवचंद लालभाई धर्मशाळा–

वडेखां चकलो, गोपीपुरा, सुरत.

इदं पुस्तकं मुम्बय्यां शाह नगीनभाई घेलाभाई जव्हेरी बजार इत्यनेन
निर्णयसागरमुद्रणालये कोलभाट वीथ्यां २३ तमे गृहे बा. रा.
घाणेकर द्वारा मुद्रयित्वा प्रकाशितम् ।

---

Published by Shah Naginbhai Ghelabhai Javeri, N 325, Javeri Bazar
and Printed by B R Ghanekar, at N. S
Press, 23, Kolbhat Lane, Bombay

इति श्रीषोडशकप्रकरणं समाप्तम् ॥



इति श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार---ग्रन्थाङ्कः